ॐ नमः परमात्मने ।

# भक्तिसागरः ।

## श्रीनारायणभट्टविरचितः ।

अस्ति ब्रह्म चिदानन्दं स्वयं ज्योतिर्निरञ्जनम् ।
ईश्वरो लिङ्गमित्युक्तमद्वितीयमजं विभु ॥
निर्विकारं निराकारं सर्वेश्वरमनीश्वरम् ।
सर्वशक्ति च सर्वज्ञं तदंशा जीवसंज्ञिताः ॥
अनाद्यविद्योपहिता यथाग्नेर्विस्फुलिङ्गकाः ।
दार्व्याद्युपाधिसम्भिन्नास्ते कर्मभिरनादिभिः ॥
सुखदुःखप्रदैः पुण्यपापरूपैर्नियन्त्रिताः ।
तत्तज्जातियुतं देहमायुर्भोगं च कर्मजम् ॥
प्रतिजन्म प्रपद्यन्ते तेषामस्त्यपरं पुनः ।
सूक्ष्मं लिङ्गशरीरं तदा मोक्षादक्षयं मतम् ॥
सूक्ष्मं भूतेन्द्रियप्राणावस्थात्मकमिदं जगुः ।
जीवानामुपभोगाय जगदेतत्सृजत्यतः ॥
स आत्मा परमात्मा च विश्वान्ते संहरत्यथ ।
तदेतत्सृष्टिसंहारप्रवाहोऽनादिसम्मतः ॥
ते जीवा नात्मनो भिन्ना भिन्नया चात्मनो जगत् ।
सृजत्यविद्यया ऽन्योऽयं यथा रज्जुर्भुजङ्गमात् ॥
आत्मनः पूर्वमाकाशस्ततो वायुस्ततोऽनलः ।

अनलाज्जलमेतस्मात् पृथिवी समजायत ।
महाभूतान्यमून्येषा विराजो ब्रह्मणस्तनुः ॥
ब्रह्मा ब्राह्मणमसृजत् तस्मै वेदान् प्रदाय च ।
भौतिकं वेदशब्देभ्यः सर्जयामास तेन तत् ॥
तदाज्ञयाऽसृजद् ब्रह्मा मनसैव प्रजापतीन् ।
तेभ्यस्तु तैजसी सृष्टिः शरीराणां निरूपिता ॥
विष्णुपुराणे पराशरमैत्रेयसंवादे पराशर उवाच ॥
आत्यन्तिकमतो ब्रह्मन्निबोध प्रतिसत्वरम् ।
आध्यात्मिकादि मैत्रेय ज्ञात्वा तापत्रयं बुधः ॥
उत्पन्नज्ञानवैराग्यः प्राप्नोत्यात्यन्तिकं लयम् ।
आध्यात्मिको वै द्विविधः शारीरो मानसस्तथा ॥
शारीरो बहुभिर्भेदैर्भिद्यते श्रूयतां च सः ।
शिरोरोगप्रतिश्यायज्वरशूलभगन्दरैः ॥
गुल्मार्शःश्वयथुश्वासच्छर्द्यादिभिरनेकधा ।
तथाऽक्षिरोगातीसारकुष्ठाद्यामयसंज्ञकैः ॥
भिद्यते देहजस्तापो मानसं श्रोतुमर्हसि ।
कामक्रोधभयद्वेषलोभमोहविषादजः ॥
शोकासूयाऽपमानेर्ष्यामात्सर्यादिभवस्तथा ।
मानसोऽपि द्विजश्रेष्ठ तापो भवति नैकधा ॥
इत्येवमादिभिर्भेदैस्तापो ह्याध्यात्मिकः स्मृतः
मृगपक्षिमनुष्याद्यैः पिशाचोरगराक्षसैः ॥
सरीसृपाद्यैश्च नृणां जायते चाधिभौतिकः ।
शीतोष्णवातवर्षाम्बुविद्युदादिसमुद्भवः ॥
तापो द्विजवरश्रेष्ठ कथ्यते चाधिदैविकः ।

अग्निमं त्रिभिरत्यर्थं वर्द्धमानाभिवेदनः।
प्रसारणाकुञ्चनादौ नाङ्गवान् प्रभुरात्मनः॥
शकृन्मूत्रमहापङ्कशायी सर्वत्र पीडितः।
निराश्वासः सचैतन्यः स्मरन् जन्मशतान्यथ॥
आस्ते गर्भेऽतिदुःखेन निजकर्मनिबन्धनः।
अधोमुखो वै क्रियते प्रबलैः सूतिमारुतैः॥
क्लेशैर्निष्क्रान्तिमाप्नोति जठरान्मातुरातुरः।
मूर्छामवाप्य महतीं संस्पृष्टो बाह्यवायुना॥
विज्ञानभ्रंशमाप्नोति जातश्च मुनिसत्तम।
कण्टकैरिव पुन्नागः क्रकचैरिव दारितः॥
पूतिव्रणो निष्पतति धरण्यां क्रिमिको यथा।
कण्डूयने चाप्यशक्तः परिवर्त्तेऽप्यनीश्वरः॥
स्नानपानादिकाहारमवाप्नोति न चेच्छया।
अशुचिः संस्तरे सुप्तः कीटदंशादिभिस्तथा॥
भक्ष्यमाणोऽपि नैवैषां समर्थो विनिवारणे।
जन्मदुःखान्यनेकानि जन्मनोऽनन्तराणि च॥
बालभावे यदाप्नोति आधिभूतादिकानि च।
अज्ञानतमसाऽऽच्छन्नो मूढान्तःकरणो नरः॥
न जानाति कुतः कोऽहं क्वाह गन्तुं किमात्मकः।
केन बन्धेन बद्धोऽहं कारणं किमकारणम्॥
किं कार्यं किमकार्यं च किं वाच्यं किं च नोच्यते।
कोऽधर्मः कश्च धर्मोऽथ कस्मिन् वर्त्तेत वा कथम्॥
किं कर्तव्यमकर्तव्यं किं वा किं गुणदोषवत्।
एवं पशुसमैर्मूढैरज्ञानप्रभवं महत्॥

अवाप्यते नरैर्दुःखं शिश्नोदरपरायणैः ।
अज्ञान तामसो भावः कार्यारम्भप्रवृत्तिजः ॥
अज्ञानिनां प्रवर्तेत कर्मलोपस्ततो द्विज ।
नरकं कर्मणां लोपात् फलमाहुर्महर्षयः ॥
तस्मादज्ञानिनां दुःखमिह चामुत्र चोत्तमम् ।
जराजर्जरदेहश्च शिथिलावयवः पुमान् ॥
विचलच्छीर्णदशनो वलीस्नायुशिरावृतः ।
दूरप्रनष्टमनसो व्योमान्तर्गततारकः ॥
नासाविवरपर्याप्तरोमपुञ्जश्चलद्वपुः ।
प्रकटीभूतसर्वास्थिनतपृष्ठास्थिसन्ततिः ॥
उच्छिन्नजठराग्नित्वादल्पाहारोऽप्यचेष्टितः ।
कृच्छ्राच्चङ्क्रमणोत्थानशयनासनचेष्टितः ॥
मन्दीभवच्छ्रोत्रनेत्रो गलल्लालाविलाननः ।
अनायत्तैः समस्तैश्च करणैर्मरणोन्मुखः ॥
तत्क्षणेऽप्यनुभूतानामस्मर्ताऽखिलवस्तुनाम् ।
सकृदुच्चरिते वाक्ये समुद्भूतमहाश्रमः ॥
श्वासकासमहायाससमुद्भूतप्रजागरः ।
अन्येनोत्थापितोऽन्येन तथा संवेश्यते जरी ॥
भृत्यात्मपुत्रदाराणामवमानपदीकृतः ।
प्रक्षीणाखिलशौचश्च विहाराहारसंस्पृहः ॥
अनुभूतमिवान्यस्मिन् जन्मन्यात्मविचेष्टितम् ।
संस्मरन् यौवने दीर्घं निश्वसित्यतितापितः ॥
एवमादीनि दुःखानि प्राप्नोति शृणु तानि तु ।
चलग्रीवाङ्घ्रिहस्तैश्च व्याप्तो वेपथुना नरः ॥

मुहुर्ग्लानिः परवशो मुहुर्जीववलान्वितः ।
हिरण्यधान्यतनयभार्य्याभृत्यगृहादिषु ॥
एते कथं भविष्यन्तीत्येतावन्ममताकुलः ।
कर्मभिश्च महारोगैः क्रकचैरिव दारुणैः ॥
शरैरिवान्तकस्योग्रैश्छिद्यमानास्थबन्धनः ।
निवर्त्तमानताराक्षि हस्तं पादं मुहुः क्षिपन् ॥
संशुष्यमाणताल्वोष्ठपुटो घुरघुरायते ।
निरुद्धकण्ठो दोषाद्यैरुदानश्वासपीडितः ॥
तापेन महता व्याप्तस्तृषार्त्तः क्षुधया तथा ।
क्लेशादुत्क्रान्तिमाप्नोति याम्यकिङ्करपीडितः ॥
शृणुष्व नरके यानि प्राप्यन्ते पुरुषैर्मृतैः ।
याम्यकिङ्करपाशादिग्रहणं दण्डताडनम् ॥
यामस्य दर्शने चोग्रदुःखमार्गविलोकनम् ।
करम्भवालुकाकुम्भयन्त्रशस्त्राग्निभीषणम् ॥
प्रत्येकं नरके याश्च यातना द्विज दुःसहाः ।
क्रकचैः पीड्यमानानामूखायाञ्चापि धम्यताम् ॥
कुठारैः पीड्यमानानां भूमौ वाऽपि निखन्यताम् ।
शूलेष्वारोप्यमानानां व्याघ्रवक्त्रे प्रवेश्यताम् ॥
गृध्रैः सम्भक्ष्यमाणानां क्षिप्यतां चेष्ययन्त्रकैः ।
ततश्च यानि दुःखानि पापहेतूद्भवानि च ॥
प्राप्यन्ते नारकैर्विप्र तेषां संख्या न विद्यते ।
न केवलं द्विजश्रेष्ठ नरके दुःखपद्धतिः ॥
स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः ।
पुनश्च गर्भे भवति जायते च पुनर्नरः ॥

गर्भे विलीयते भूयो जायमानो ऽस्तमेति च ।
जातमात्रश्च म्रियते बालभावे ऽथ यौवने ॥
मध्यमं वा पदं प्राप्य वार्द्धके च ध्रुवा मृतिः ।
यावज्जीवति यावच्च दुःखैर्नानाविधैः प्लुतः ॥
तन्तुकारणपक्षौघैरास्ते कर्पासबीजवत् ।
द्रव्यनाशे तथोत्पत्तौ पालने च तथा नृणाम् ॥
भवन्त्यनेकदुःखानि तथैवेष्टविपत्तिषु ।
यद्यत्प्रीतिकरं पुंसां वस्तु मैत्रेय जायते ॥
तदेव दुःखवृक्षस्य बीजत्वमुपगच्छति ।
कलत्रमित्रपुत्रार्थगृहक्षेत्रधनादिकैः ॥
क्रियते न तथा भूरि सुखं पुंसां यथा सुखम् ।
इति संसारदुःखार्कतापतापितचेतसाम् ॥
विमुक्तिपादपच्छायामृते कुत्र सुखं नृणाम् ।

इति जीवस्य शरीरसम्बन्धान्नरकस्वर्गादिकर्मफलनिरूपणम् ॥

तदस्य त्रिविधस्यापि दुःखजातस्य पण्डितः ।
गर्भजन्मजराद्येषु स्थानेषु प्रभविष्यतः ॥
निरस्तातिशयाह्लादिसुखभावैकलक्षणा ।
भेषजभगवत्प्राप्तिरेकान्तात्यन्तिकी मता ॥
तस्मात्तत्प्राप्तये यत्नः कर्तव्यः पण्डितैर्नरैः ।
तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने ॥
आगमोक्तं विवेकाच्च द्विधा ज्ञानं तथोच्यते ।
शब्दब्रह्मागममयं परं ब्रह्म विवेकजम् ॥
अन्धतम इवाज्ञानं दीपवच्चेन्द्रियोद्भवम् ।
यथा सूर्यस्तथा ज्ञानं यद्विप्रर्षे विवेकजम् ।

मनुरप्याह वेदार्थं स्मृत्वा यन्मुनिसत्तम ॥
तदेतच्छ्रूयतामत्र सम्बन्धाद्वदतो मम ।
द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ॥
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ।
द्वे विद्ये वेदितव्ये च इति चाथर्वणी श्रुतिः ॥
परया त्वक्षरप्राप्तिर्ऋग्वेदादिमथापरा ।
यत्तदव्यक्तमजरमचिन्त्यमजमव्ययम् ॥
अनिर्देश्यमरूपं च पाणिपाद्याद्यसंयुतम् ।
विभु सर्वगतं नित्यभूतयोनिमकारणम् ॥
व्याप्यं व्याप्तं यतः सर्वं तद्वै पश्यन्ति सूरयः ।
तद्ब्रह्म तत्परं धाम तद्ध्येयं मोक्षकाङ्क्षिभिः ॥
श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम् ।
तदेव भगवद्वाच्यं स्वरूपं परमात्मनः ॥
वाचको भगवच्छब्दस्तस्याद्यस्याक्षयात्मनः ॥
एवं निगदितार्थस्य सत्तत्त्वन्तस्य तत्त्वतः ।
ज्ञायते येन तज्ज्ञानं परमन्यत्त्रयीमयम् ।
अशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज ॥
पूजायां भगवच्छब्दो ब्रते वै ह्यौपचारिकः ।
शुद्धे महाविभूत्याख्ये परे ब्रह्मणि वर्तते ॥
मैत्रेय भगवच्छब्दः सर्वकारणकारणे ।
सम्भर्तेति यथा भर्ता भकारोऽर्थद्वयान्वितः ॥
नेता गमयिता वस्तून् भकारार्थो महामुने ।
ऐश्वर्यस्य समस्तस्य वीर्यस्य यशसः श्रियः ॥
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ।

वसन्ति सर्वभूतानि सर्वभूतेऽखिलात्मनि ॥
सर्वभूतेष्वशेषेषु वकारोऽर्थस्ततोऽव्ययः।
एवमेव महाशब्दो भगवानिति स स्मृतः ॥
परस्य ब्रह्मभूतस्य वासुदेवस्य वान्यतः।
तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः ॥
शब्दोऽयं नोपचारेण अन्यत्र ह्युपचारतः।
उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ॥
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति।
ज्ञानशक्तिबलैश्वर्यवीर्यतेजांसि सेश्वरः।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥
सर्वाणि तत्र भूतानि वसन्ति परमात्मनि।
भूतेषु च स सर्वात्मा वासुदेवस्ततः स्मृतः ॥
स सर्वभूतप्रकृतिं विकारं गुणादिदोषांश्च मुने व्यतीतः।
अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद्भुवनान्तराले ॥
समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशावृतभूतसर्गः।
इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितार्थः ॥
तेजोबलैश्वर्यमहावबोधः स्ववीर्यशक्त्यादिगुणैकराशिः।
परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ॥
स ईश्वरो व्यस्तसमस्तरूपोऽव्यक्तस्वरूपः प्रकटस्वरूपः।
सर्वेश्वरः सर्वगतश्च वेत्ता समस्तशक्तिः परमेश्वराख्यः ॥
स ज्ञायते येन तदस्तदोषं शुद्धं परं निर्मलरूपमेकम्।
संदृश्यते वाऽप्यथ गम्यते वा तद्ज्ञानमज्ञानमतोऽन्यदुक्तम् ॥

पराशर उवाच।

स्वाध्यायसंयमाभ्यासा दृश्यते मुनिसत्तम।

तत्प्राप्तिकारणं ब्रह्मन् तदेतदिति पठ्यते ॥
स्वाध्यायाद्योगमासीत योगात् स्वाध्यायमात्मनि।
स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशते ॥
न मां स चक्षुषा द्रष्टुं ब्रह्मभूतः स शक्यते।
इति भगवच्छब्दस्वरूपकथनम् ॥

मैत्रेय उवाच।

भगवंस्तं महायोगं ज्ञातुमिच्छामि तद्वद।
ज्ञाते यत्राखिलाधारं पश्येयं परमेश्वरम् ॥

पराशर उवाच।

यथा केशिध्वजः प्राह खाण्डिक्याय महात्मने।
जनकाय पुरा योगं तमहं कथयामि ते ॥

मैत्रेय उवाच।

खाण्डिक्यः कोऽभवद्ब्रह्मन् को वा केशिध्वजोऽभवत्।
कथं तयोश्च संवादो योगसबन्धवानभूत् ॥

पराशर उवाच।

धर्मध्वजो वै जनकस्तस्य पुत्रो मितध्वजः।
कृतध्वजश्च नामासीत्सदाचाररतिर्नृपः ॥
कृतध्वजस्य पुत्रोऽभूद्धन्यः केशिध्वजो द्विज।
पुत्रो मितध्वजस्याऽपि खाण्डिक्यो जनको ऽभवत् ॥
कर्ममार्गे च खाण्डिक्यः पृथिव्यामभवत्कृती।
केशिध्वजोऽप्यतीवासीदात्मविद्याविशारदः ॥
तावुभावपि चैवास्तां विजिगी(?) परस्परम्।
केशिध्वजेन खाण्डिक्यः स्वराज्यादवरोपितः ॥
पुरोधसा मन्त्रिभिश्च समवेतोऽल्पसाधनः।
राज्यान्निराकृतः सोऽथ दुर्गावासकरो ऽभवत् ॥

इयाज सोऽपि सुबहून् यज्ञान् यज्ञव्यपाश्रयः ।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥
एकदा वर्त्तमानस्य योगे योगविदां वर ।
धर्मधेनुं जघानोग्रः शार्दूलो विजिने वने ॥
ततो राजा हतां ज्ञात्वा धेनुं व्याघ्रेण ऋत्विजः ।
प्रायश्चित्तं स पप्रच्छ किमत्रेति विधीयते ॥
ते चोचुर्न वयं विद्मः कशेरुः पृच्छ्यतामिति ।
कशेरुरपि तेनोक्तस्तथेति प्राह भार्गवम् ॥
शुनकं पृच्छ राजेन्द्र नाहं वेद्मि स वेत्स्यति ।
स गत्वा तमपृच्छच्च सोऽप्याह शृणु यन्मुने ॥
न कशेरुर्न चैवाहं न वाऽन्यः साम्प्रतं भुवि ।
वेत्त्येक एव त्वच्छत्रुः खाण्डिक्यो यो जितस्त्वया ॥
स चाह तं व्रजाम्येष प्रष्टुमात्मरिपुं मुने ।
प्राप्त एव महायज्ञो यदि मां स हनिष्यति ॥
प्रायश्चित्तं स चेत् पृष्टो वदिष्यति रिपुर्मम ।
ततश्चाविकलो योगो मुनिश्रेष्ठ भविष्यति ॥

पराशर उवाच ।

इत्युक्त्वा रथमारुह्य कृष्णाजिनधरो नृपः ।
वनं जगाम यत्रास्ते स खाण्डिक्यो महामुनिः ॥
तमायान्तं समालोक्य खाण्डिक्यो रिपुमात्मनः ।
प्रोवाच क्रोधताम्राक्षः समारोपितकार्मुकः ॥

खाण्डिक्य उवाच ।

कृष्णाजिनं त्वं कवचमाबध्यास्मान्निहंस्यसि ।
कृष्णाजिनधरं वेद्मि न चैनं प्रहरिष्यति ॥

मृगाणां वद पृष्ठेषु मूढ कृष्णाजिनेन किम्।
ये वा मया त्वया चोग्राः प्रहिताः सितसायकाः॥
स त्वामहं हनिष्यामि न मे जीवन् विमोक्ष्यसे।
आतताय्यसि दुर्बुद्धे मम राज्यहरो रिपुः॥

केशिध्वज उवाच।

खाण्डिक्य संशयं प्रष्टुं भवन्तमहमागतः।
न त्वां हन्तुं विचार्य्यैतत्कोपं बाणं विमुञ्च वै॥

पराशर उवाच।

ततः स मन्त्रिभिः सार्धमेकान्ते स पुरोहितैः।
मन्त्रयामास खाण्डिक्यः सर्वैरेव महामतिः॥
तमूचुर्मन्त्रिणो वध्यो रिपुरेष वशं गतः।
हते तु पृथिवी सर्वा तव वश्या भविष्यति॥
खाण्डिक्यः प्राह तान् सर्वानेवमेव न संशयः।
हते तु पृथिवी सर्वा मम वश्या भविष्यति॥
परलोकजयस्तस्य पृथिवी सकला मम।
न हन्मि वै लोकजयो मम तस्य वसुन्धरा॥
परलोकजयस्तस्य स्वप्नकालो महीजयः।
तस्मादेनं न हनिष्ये यत्पृच्छति वदामि तत्॥

पराशर उवाच।

ततस्तमभ्युपेत्याह खाण्डिक्यजनको रिपुम्।
प्रष्टव्यं यत्त्वया सर्वं तत्पृच्छस्व वदाम्यहम्॥
ततः सर्वं यथावृत्तं धर्मधेनुवधं द्विजः।
कथयित्वा स पप्रच्छ प्रायश्चित्तं हि तद्‌व्रतम्॥
स चाचष्ट यथान्यायं द्विज केशिध्वजाय वै।
प्रायश्चित्तमशेषेण यद्वै तत्र विधीयते॥

विदितार्थः स तेनैवमनुज्ञातो महात्मना।
यागभूमिमुपागम्य चक्रे भूरिक्रियाक्रमम्॥
क्रमेण विधियागन्तु नीत्वा सोऽवभृथान्वयम्।
कृतकृत्यस्ततो भूत्वा चिन्तयामास पार्थिवः॥
पूजिता ऋत्विजः सर्वे सदस्या मानिता मया।
तथैवार्थी जनो ऽप्यर्थे योजितोऽभिमतैर्मया॥
यथार्हमत्र लोकस्य मया सर्वं विचेष्टितम्।
अनिष्पन्नक्रियं चेतस्तथापि मम किं यथा॥
इत्थं स चिन्तयन्नेव सस्मार स महीपतिः।
खाण्डिक्याय न दत्तेति मया वै गुरुदक्षिणा॥
स जगाम ततो भूयो रथमारुह्य पार्थिवः।
मैत्रेय दुर्गगहनं खाण्डिक्यो यत्र संस्थितः॥
खाण्डिक्योऽपि पुनर्दृष्ट्वा तमायान्तं धृतायुधः।
तस्थौ हन्तुं कृतमतिस्तमाह स पुनर्नृपम्॥
भो नाऽहं तेऽपकाराय प्राप्तः खाण्डिक्य मा क्रुधः।
गुरोर्निष्क्रयदानाय मामवेहि त्वमागतम्॥
निष्पादितो मया यागः सम्यक् त्वदुपदेशतः।
सोऽहं ते दातुमिच्छामि वृणीष्व गुरुदक्षिणाम्॥

पराशर उवाच।

भूयः स मन्त्रिभिः सार्द्धं मन्त्रयामास पार्थिवः।
गुरुनिष्क्रयकामोऽत्र किमयं प्रार्थ्यतामिति॥
तमूचुर्मन्त्रिणो राज्यमशेषं प्रार्थ्यतामयम्।
कृतिभिः प्राप्यते राज्यमनायासितसैनिकैः॥
प्रहस्य तानाह नृपः स खाण्डिक्यो महामतिः।
स्वल्पकालमहीराज्यं मादृशैः काम्यते कथम्॥

एवमेतद्भवक्तोऽत्र अर्थसाधनमन्त्रिणः ।
परमार्थः कथं कोऽत्र यूयं नात्र विचक्षणाः ॥

पराशर उवाच ।

इत्युक्त्वा समुपेत्यैनं प्राह केशिध्वजं नृपम् ।
उवाच किमवश्यं त्वं ददासि गुरुदक्षिणाम् ॥

पराशर उवाच ।

बाढमित्येव तेनोक्तः खाण्डिक्यस्तमथाब्रवीत् ।
भवानध्यात्मविज्ञानपरमार्थविचक्षणः ॥
यदि तद्दीयते मह्यं भवता गुरुनिष्क्रयः ।
तत्क्लेशप्रशमायालं यत्कर्म तदुदारय ॥

केशिध्वज उवाच ।

न प्रार्थितं त्वया कस्मान्मद्राज्यमपवीरकम् ।
राज्यलाभाद्विना नान्यत् क्षत्रियाणामतिप्रियम् ॥

खाण्डिक्य उवाच ।

केशिध्वज निबोध त्वं मया न प्रार्थितं यतः ।
राज्यमेतदशेषं ते यत्र गृध्यन्ति पण्डिताः ॥
क्षत्रियाणामयं धर्मो यत्प्रजापरिपालनम् ।
वधश्च धर्मयुद्धेन स्वराज्यपरिपन्थिनाम् ॥
तत्राशक्तस्य मे दोषो नैवास्त्यापहृतं त्वया ।
बन्धायैव भवत्येका अविद्याप्यक्रमोज्झिता ॥
जन्मोपभोगलिप्सार्थमियं राज्यस्पृहा मम ।
अन्येषां दोषजा नैव धर्ममेवानुरुध्यति ॥
न याच्ञा क्षत्रबन्धूनां धर्मायैतत् सतां मतम् ।
अतो न याचितं राज्यमविद्यान्तर्गतं तव ॥

राज्यं गृहक्षत्रविद्वांसो ममत्वाहृतचेतसः ।
अहंमानसहायाममदमत्ता न मादृशः ॥
ततः प्रहृष्टः साध्वेतत् प्राह केशिध्वजो नृपः ।
खाण्डिक्यं जनकं प्रीत्या श्रूयतां वचनं मम ॥
अहं च विद्यया मृत्युं तर्तुकामः करोमि किम् ।
राज्यं यागांश्च विविधान् भोगैः पुण्यक्षयं तथा ॥
तदिदं ते मनो दिष्ट्या विवेकैश्वर्यतां गतम् ।
श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन ॥
अनात्मन्यात्मबुद्धिर्या स्वस्वे स्वमिति या मतिः ।
अविद्यातरुसम्भूतिबीजमेतद्द्विधा स्थितम् ॥
पञ्चभूतात्मके देहे देही मोहं समाश्रितः ।
अहमेतदितीत्युच्चैः कुरुते कुमतिर्मतिम् ॥
आकाशवाय्वग्निजलपृथिवीभ्यः पृथक् स्थितः ।
नात्मन्यात्ममयं भावं यः करोति कलेवरे ॥
कलेवरे ऽथ भोग्यं हि गृहक्षेत्रादिकं च यः ।
अदेहेनात्मनि प्राज्ञो ममेदमिति मंस्यते ॥
इत्थं च पुत्त्रपौत्त्रेषु तद्देहोत्पादितेषु कः ।
करोति पण्डितः स्वाम्यं तथात्मनि कलेवरे ॥
सर्वं देहोपभोगाय कुरुते कर्म मानवः ।
मृण्मयं हि यथा गेहं लिप्यते वै मृदम्भसा ॥
पार्थिवोऽयं तथा देहो मृदम्भोलेपनस्थितिः ।
पञ्चभूतात्मकैर्भोगैः पञ्चभूतात्मकं वपुः ॥
आप्याय्यते यदि ततः पुंसो गर्वोऽत्र किं कृतः ।
अनेकजन्मसाहस्रं संसारपदवीं व्रजन् ॥

मोहाश्रमं प्रयातोऽसौ वासनारेणुगुण्ठितः ।
प्रक्षाल्यते यदा सोऽस्य रेणुर्ज्ञानोष्णवारिणा ॥
तदा संसारिपान्थस्य याति मोहश्रमः शमम् ।
मोहश्रमे शमं याते स्वस्थान्तःकरणः पुमान् ॥
अनन्यातिशयाबाधः परं निर्वाणमृच्छति ।
निर्वाणमयएवायमात्मा ज्ञानमयोऽमलः ॥
दुःखाज्ञानमला धर्माः प्रकृतेस्तेऽमलात्मनः ।
जलस्याग्निजसंसर्गः स्थालीसंगात् तथा हि हि ॥
शब्दोद्रेकादिकान् धर्मांस्तत् करोति यथा मुने ।
तथात्मा प्रकृतेः सङ्गादहम्मानादिदूषितः ॥
भजते प्राकृतान् धर्मानन्यस्तेभ्यो हि सोऽव्ययः ।
तदेतत् कथितं बीजमविद्याया मया तव ॥
क्लेशानां च क्षयकरं योगादन्यन्न विद्यते ॥

खाण्डिक्य उवाच ।

तद्ब्रवीहि महाभाग योगं योगविदुत्तम ।
विज्ञातयोगशास्त्रार्थस्त्वमस्यां निमिसन्ततौ ॥

केशिध्वज उवाच ।

योगस्वरूपं खाण्डिक्य श्रूयतां गदतो मम ।
यत्र स्थितो न च्यवते प्राप्य ब्रह्मलयं मुनिः ॥
मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धस्य विषयासङ्गि मुक्तेर्निर्विषयं तथा ॥
विषयेभ्यः समाहृत्य विज्ञानात्मा मनो मुने ।
चिन्तयेन्मुक्तये तेन ब्रह्मरूपं महेश्वरम् ॥
आत्मभावं नयत्येनं तद्ब्रह्म ध्यानिनं मुने ।

किं कार्यं चात्मनः शक्त्या लोहमाकर्षको यथा ॥
आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः।
तस्यां ब्रह्मणि संयोगो योग इत्यभिधीयते ॥
योगयुक् प्रथमं योगी युञ्जमानोऽभिधीयते।
विनिष्पन्नसमाधिस्तु परब्रह्मोपलब्धिवान् ॥
यद्यन्तरायदोषेण दुष्यते नास्य मानसम्।
जन्मान्तरैरभ्यसतो मुक्तिः पूर्वस्य जायते ॥
विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि।
प्राप्नोति योगी योगाग्निदग्धकर्मचयोऽचिरात् ॥
ब्रह्मचर्यमहिंसां च सत्यास्तेयाऽपरिग्रहान्।
सेवेत योगी निष्कामो योग्यतां स्वमनो नयन् ॥
स्वाध्यायशौचसन्तोषतपांसि नियतात्मवान्।
कुर्वीत ब्रह्मणि तथा यथाऽस्मिन् प्रवणं मनः ॥
एते यमाः सनियमाः पञ्च पञ्च प्रकीर्तिताः।
विशिष्टफलदाः काम्या निःकामानां विमुक्तिदाः ॥
एवं भद्रासनादीनां समास्थाय गुणैर्युतः।
यमाख्यैर्नियमाख्यैश्च युञ्जीत नियतो यतिः ॥
प्राणाख्यमनिलं वश्यमभ्यासात् कुरुतेऽति यत्।
प्राणायामः स विज्ञेयः सबीजो बीज एव च ॥
परस्परेणाभिभवं प्राणायामौ यदानिलौ।
कुरुतः सहितस्तेन तृतीयः संयमात् तयोः ॥
तस्य वालम्बनवतः स्थूलरूपं द्विजोत्तम।
आलम्बनमनन्तस्य योगिनोऽभ्यसतः शतम् ॥
शब्दादिष्वनुरक्तानि निगृह्याक्षाणि योगवित्।

कुर्याच्चित्तानुकारीणि प्रत्याहारपरायणः ॥
वश्यता परमा तेन जायते ऽतिचलात्मनाम् ।
इन्द्रियाणामवश्यैस्तैर्न योगी योगसाधकः ॥
प्राणायामेन पवनैः प्रत्याहारेण चेन्द्रियैः ।
वशीकृतैस्ततः कुर्यात् स्थितं चेतः शुभाश्रये ॥

इति योगस्वरूपकथनम् ॥

खाण्डिक्य उवाच ।

कथ्यतां मे महाभाग चेतसो यः शुभाश्रयः ।
यदाधारमशेषन्तु हन्ति दोषफलोद्भवम् ॥

केशिध्वज उवाच ।

आश्रयश्चेतसो ब्रह्म द्विधा तच्च स्वरूपतः ।
भूप मूर्त्तममूर्त्तञ्च परं चापरमेव च ॥
त्रिविधा भावना भूप विश्वमेतन्निबोध ताम् ।
ब्रह्माख्या कर्म्मसञ्ज्ञा च तथा चैवोभयात्मिका ॥
कर्म्मभावात्मिका चैका ब्रह्मभावात्मिका परा ।
उभयात्मिका तथैवान्या त्रिविधा भावभावना ॥
सनन्दनादयो ब्रह्मभावभावनया युताः ।
कर्म्मभावनया चान्ये देवाद्याः स्थावराश्चराः ॥
हिरण्यगर्भादिषु च ब्रह्मकर्म्मात्मिका द्विधा ।
विकारबोधयुक्तेषु भिद्यते भावभावना ॥
अक्षीणेषु समस्तेषु विशेषेषु न कर्म्मसु ।
विश्वमेतत् परं चान्यद्भेदभिन्नदृशां नृप ॥
प्रत्यस्तमितभेदं यत्सत्तामात्रं त्वगोचरम् ।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसञ्ज्ञितम् ॥

तच्च विष्णोः परं रूपमरूपस्याक्षमक्षयम् ।
विश्वस्य रूपं वै रूपलक्षणं परमात्मनः ॥
न तद्योगयुजा शक्यं नृप चिन्तयितुं यतः ॥

तथा च योगवाशिष्ठे ॥

सामान्यं परमं चैव द्वे रूपे विद्धि मेऽनघ ।
यच्चादियुक्तं(?) सामान्यं भजन्ते मूढबुद्धयः ॥
शृणु ब्रह्मविदां श्रेष्ठ देवार्चनमनुत्तमम् ।
न देवः पुण्डरीकाक्षो न च देवस्त्रिलोचनः ॥
आकारादिपरिच्छिन्ने मिते वस्तुनि तत् कुतः ।
अकृत्रिममनाद्यन्तं देवं तं चिच्छिवं विदुः ॥
अज्ञानशिवतत्त्वानामाकाराद्यर्चनं कृतम् ।
योजनाध्वन्यशक्तस्य क्रोशाध्वा परिमीयते ॥
अकृत्रिममनाद्यन्तमद्वितीयमखण्डितम् ।
अबहिःसाधनासाध्यं सुखं तस्मादवाप्यते ॥
परं रूपमनाद्यन्तं यन्ममैकमनामयम् ।
शिवं चिन्मात्रमकलं पूज्यं पूजाविदो विदुः ॥
त्रयोदशनिमेषैस्तु भूमिदानफलं लभेत् ।
निमेषाणां शतेनैव अश्वमेधफलं लभेत् ॥
अश्वमेधसहस्रस्य घटिकार्द्धेन लभ्यते ।
घटिकां पूजयेद्यस्तु राजसूयं लभेत सः ॥
मध्याह्नपूजनादित्थं राजसूयैकलक्षभाक् ।
दिवा संपूजयित्वैव परे धाम्नि वसेन्नरः ॥
शमबोधादिभिः पुष्पैर्देव आत्मा यदर्च्यते ।
तत्तु देवार्चनं विद्धि नाकारार्चनमर्चनम् ॥

सति दीप इवालोकः सत्यर्के इव वासरः ।
सति पुष्प इवामोदः चिति सत्यां जगत् तथा ॥
प्रतिभासत एवायं न जगत् परमार्थतः ।
अव्युच्छिन्नचिदात्मैकः पुमानस्तीह नेतरः ॥
स्वसंकल्पवशाद्बद्धो निःसङ्कल्पश्च मुच्यते ।
तस्मिंश्च दर्पणे स्फारे समस्ता वस्तुदृष्टयः ॥
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ।
ज्ञातं ज्ञातव्यमधुना दृष्टं द्रष्टव्यमव्ययम् ॥
विश्रान्तोऽस्मि चिरं श्रान्तः चिन्मात्रान्नास्मि किञ्चन ।
अविद्यां श्रेष्टया श्रेष्टः चालयन्निह तिष्ठति ॥
मलं मलेनापहरन् युक्तितो रजको यथा ।
चित्तमेव हि संसारि रागादिक्लेशदूषितम् ॥
तदेव तैर्विनिर्मुक्तं मुक्त मित्यभिधीयते ।
विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथापरा ॥
अविद्याकर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ।
येयं क्षेत्रज्ञशक्तिः सा चेष्टितं नृप सर्वगा ॥
संसारतापानखिलानवाप्नोत्यत्र सन्ततान् ।
तयातिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ॥
सर्वभूतेषु भूपाल तारतम्येन लक्ष्यते ।
अप्राणिमत्सु स्वल्पाऽन्या स्थावरेषु ततोऽधिका ॥
सरीसृपेषु भूतेभ्योऽप्यतिशक्तिः पतत्रिषु ।
पतत्रिभ्यो मृगास्तेभ्यस्तच्छक्त्या पशवोऽधिकाः ॥
पशुभ्यो मनुजाश्चातिशक्त्या पुंसः प्रभाविताः ।
एतेभ्यो नागगन्धर्वयक्षाद्या देवता नृप ॥

शक्रः समस्तदेवेभ्यस्ततश्चाति प्रजापतिः।
हिरण्यगर्भोऽपि ततः पुंसः शक्त्युपलक्षितः॥
एतान्यशेषरूपाणि तस्य रूपाणि पार्थिव।
यतस्तच्छक्तियोगेन युक्तानि नभसा यथा॥
एतत् स्थूलं हरे रूपं चिन्तयेद्विश्वगोचरम्।
हिरण्यगर्भो भगवान् वासवोऽथ प्रजापतिः॥
मरुतो वसवो रुद्रा भास्करास्तारका ग्रहाः।
गन्धर्वयक्षदैत्याद्याः सकला देवयोनयः॥
मनुष्याः पशवः शैलाः समुद्राः सरितो द्रुमाः।
भूप भूतान्यशेषाणि भूतानां ये च हेतवः॥
प्रधानादिविशेषान्तं चेतनाचेतनात्मकम्।
एकपादं द्विपादञ्च बहुपादमपादकम्॥
मूर्तमेतद्धरे रूपं भावनात्रितयात्मकम्।
एतत्सर्वमिदं विश्वं जगदेतच्चराचरम्॥
परं ब्रह्मस्वरूपस्य विष्णोः शक्तिसमन्वितम्।
द्वितीयं विष्णुसञ्ज्ञस्य योगिध्येयं महामुने॥
अमूर्तं ब्रह्मणो रूपं यत्सदित्युच्यते बुधैः।

योगवाशिष्ठे।

भक्तिर्हि द्विविधा प्रोक्ता ऽवन्ध्यावन्ध्या च राघव।
अवन्ध्या सर्वभूतानां वन्ध्या तत्त्वविदां मता॥
आत्मतत्त्वाऽवबोधेन हीना देहादिव्रसजा।
भूयः संसारदा भक्तिरिष्टा ऽवन्ध्येति कथ्यते॥
आत्मतत्त्वावबोधेन सत्यभूतविवेकजा।
वन्ध्या हि कथ्यते भक्तिर्भूयः संसारवर्जिता॥

समस्ताः शक्तयश्चैताः कामयन्त्र प्रतिष्ठिताः ।
तद्विश्वरूपं वै रूपं रूपमन्यद्धरेर्महत् ॥
समस्तशक्तिरूपाणि तत् करोति नरेश्वर ।
देवतिर्यङ्मनुष्याख्य चेष्टावन्ति स्वलीलया ॥
जगतामुपकाराय न सा कर्मनिमित्तजा ।
चेष्टा तस्याऽप्रमेयस्य व्यापिनोऽव्याहतात्मिका ॥
तद्रूपं विश्वरूपस्य तस्य योगयुजा नृप ।
चिन्त्यमानं विशुद्ध्यर्थं सर्वकिल्बिषनाशनम् ॥
यथाऽग्निरुद्धतशिखः कक्षं दहति सानिलः ।
तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषम् ॥
तस्मात् समस्तशक्तीनामाधारे तत्र चेतसः ।
कुर्वीत संस्थितिं सा तु विज्ञेया शुद्धधारणा ॥
शुभाश्रयः स चित्तस्य सर्वगस्य तथात्मनः ।
त्रिभावभावनाहीनो मुक्तये योगिनां नृप ॥
अन्ये तु पुरुषव्याघ्र चतस्रो ये व्यपाश्रयाः ।
अशुद्धास्तु समस्तास्तु देवाद्याः कर्मयोनयः ॥

वाशिष्ठे ।

वासना द्विविधा ज्ञेया शुद्धा च मलिना तथा ।
मलिना जन्मनो हेतुः शुद्धा जन्मविनाशिनी ॥
अज्ञानसुघनाकारा घनाहङ्कारशालिनी ।
पुनर्जन्मकरी प्रोक्ता मलिना वासना बुधैः ॥
पुनर्जन्मान्तरत्यक्ता स्थिता सम्भृष्टबीजवत् ।
देहार्थं ध्रियते ज्ञातज्ञेया शुद्धेति चोच्यते ॥
मूर्त्तं भगवतो रूपं सर्वापाश्रयनिस्पृहम् ।

एषा वै धारणा ज्ञेया यच्चित्तं तत्र धार्यते ॥
तच्च मूर्त्तं हरे रूपं यादृक् चिन्त्यं नराधिप ।
तच्छ्रूयतामनाधारा धारणा नोपपद्यते ।
प्रसन्नचारुवदनं पद्मपत्रायतेक्षणम् ॥
सुकपोलं सुविस्तीर्णललाटफलकोज्ज्वलम् ।
कर्णान्तरसुविस्तीर्णचारुकर्णविभूषितम् ॥
कम्बुग्रीवं सुविस्तीर्णश्रीवत्साङ्कितवक्षसम् ।
वलीविभङ्गिनामग्ननाभिना चोदरेण वै ॥
प्रलम्बाष्टभुजं विष्णुमथवाऽपि चतुर्भुजम् ।
समास्थितोरुजङ्घञ्च सुस्थिताङ्घ्रिकराम्बुजम् ॥
चिन्तयेद्विष्णुरूपं तं पीतनिर्मलवाससम् ।
किरीटचारुकेयूरकटकादिविभूषितम् ॥
शार्ङ्गखड्गगदाशङ्खचक्राक्षवलयान्वितम् ।
चिन्तयेत्तं महायोगी समाधायात्ममानसम् ॥
तावद्यावद्दृढीभूता तत्रैव नृप धारणा ।
व्रजतस्तिष्ठतोऽन्यद्वा स्वेच्छया कर्म कुर्वतः ॥
नापयाति यदा चित्तात् सिद्धां मन्येत तां तदा ।
ततः शङ्खगदाचक्रशार्ङ्गादिरहितायुधम् ॥
चिन्तयेद्भगवद्रूपं प्रशान्तं साक्षसूत्रकम् ।
सा यदा धारणा तद्वदवस्थानवती ततः ॥
किरीटकेयूरमुखैर्भूषणै रहितं स्मरेत् ।
तदेकावयवं देवं चेतसा हि पुनर्बुधः ॥
कुर्यात्ततो वयमिति प्रणिधानपरो भवेत् ।
तद्रूपप्रत्यये चैकसन्ततिश्चान्यनिःस्पृहा ॥
तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप ।

तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि तत् ॥
मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते ।
विज्ञानं प्रापकं प्राप्य परे ब्रह्मणि पार्थिव ॥
प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः ।
क्षेत्रज्ञः कारणं ज्ञानं करणं तस्य तेन तत् ॥
निष्पाद्य मुक्तिकार्य्यञ्च कृतकृत्यं निवर्त्तते ।
तद्भावभावनापन्नस्ततोऽसौ परमात्मनि ॥
भवत्यभेदभावश्च तस्य ज्ञानकृतो ऽभवत् ।
विभेदजनके ज्ञाने नाशमात्यन्तिकं गते ॥
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ।
इत्युक्तस्ते मया योगः खाण्डिक्य परिपृच्छतः ॥
संक्षेपविस्ताराभ्याञ्च किमन्यत् क्रियतां तव ।

खाण्डिक्य उवाच ।

कथितो यो हि सद्भावः सर्व्वमेव कृतं मम ।
तवोपदेशेनाशेषो नष्टश्चित्तमलो यतः ॥
ममेति यन्मया चोक्तमसदेतन्न चान्यथा ।
नरेन्द्र गदितुं शक्यमपि विज्ञेयवेदिभिः ॥
अहं ममेत्यविद्येयं व्यवहारस्तथा ऽपरः ।
परमार्थस्त्वसंलापो गोचरे वचसां न सः ॥
तद्गच्छ श्रेयसे सर्व्वं ममैतद्भवता कृतम् ।
यद्विमुक्तिप्रदो योगः प्रोक्तः केशिध्वजाव्ययः ॥

पराशर उवाच ।

यथार्हपूजया तेन खाण्डिक्येन स पूजितः ।
आजगाम पुरं ब्रह्मंस्ततः केशिध्वजो नृपः ॥

खाण्डिक्योऽपि सुतं कृत्वा राजानं योगसिद्धये ।
वनं जगाम गोविन्दे समावेशितमानसः ॥
तत्रैकान्तरतिर्भूत्वा यमादिगुणशोभितः ।
सत्त्वाख्ये निर्मले ब्रह्मण्यवाप नृपतिर्लयम् ॥
केशिध्वजोऽपि मुक्त्यर्थं स्वकर्मक्षयणोन्मुखः ।
बुभुजे विषयान् कर्म चक्रे चानभिसंहितम् ॥
स कल्याणोपभोगैश्च क्षीणपापमलस्ततः ।
स चाप सिद्धिमत्यन्तं तापक्षयफलं द्विज ॥

इति श्रीनारायणभट्टविरचिते भक्तिसागरे जीवकर्मफलभगवच्छब्दस्वरूपयोगस्वरूपभावनास्वरूपदेवतार्चनविधिविष्णुभक्तिसगुणब्रह्मध्याननिरूपणं नाम प्रथमस्तरङ्गः ॥

मैत्रेय उवाच ।

यत्तु तद्भगवानाह भरतस्य महीपतेः ।
श्रोतुमिच्छामि चरितं तन्ममाख्यातुमर्हसि ॥
भरतः स महीपालः शालग्रामेऽवसत् किल ।
योगयुक्तः समाधाय वासुदेवे मनः सदा ॥
पुण्यदेशप्रभावेन स्मरतश्च सदा हरिम् ।
कथं तु नाभवन्मुक्तिर्यदभूत् स द्विजः पुनः ॥
विप्रत्वे च कृतं कर्म यद्भूयः सुमहात्मना ।
भरतेन मुनिश्रेष्ठ तत् सर्वं वक्तुमर्हसि ॥

पराशर उवाच ।

शालग्रामे महाभागो भगवन्न्यस्तमानसः ।
स उवास चिरं कालं मैत्रेय पृथिवीपतिः ॥
अहिंसादिष्वशेषेषु गुणेषु गुणिनां वरः ।

अवाप परमां काष्ठां मनसश्चापि संयमे ॥
यज्ञेशाच्युत गोविन्द माधवानन्द केशव।
कृष्ण विष्णो हृषीकेशेत्याह राजा स केवलम् ॥
नान्यज्जगाद मैत्रेय किञ्चित् स्वप्नान्तरेषु च।
एतत् परं तदर्थञ्च विना नान्यदचिन्तयत् ॥
समित्पुष्पकुशादानं चक्रे देवक्रियाकृते।
जगाम सोऽभिषेकार्थमेकदा तु महानदीम् ॥
सस्नौ तत्र तथा चक्रे स्नानस्यानन्तराः क्रियाः।
अथाजगाम तत्तीर्थं जलं पातुं पिपासिता ॥
आसन्नप्रसवा ब्रह्मन्नेकैव हरिणी वनात्।
ततः समभवत् तत्र पीतप्राये जले तथा ॥
सिंहस्य नादः सुमहान् सर्वप्राणिभयङ्करः।
ततः सा च महात्रासादाप्लुता निम्नगातटम् ॥
अत्युच्चारोहणेनास्या नद्यां गर्भः पपात सः।
तमुह्यमानं वेगेन वीचिमालापरिप्लुतम् ॥
जग्राह स नृपो गर्भात् पतितं मृगपोतकम्।
गर्भप्रच्युतिदोषेण तुङ्गाक्रमणेन च ॥
मैत्रेय सापि हरिणी पपात च ममार च।
हरिणीं तां विलोक्याथ विपन्नां नृपतापसः ॥
मृगपोतं समादाय पुनराश्रममागमत्।
चकारानुदिनं चासौ मृगपोतस्य वै नृपः ॥
पोषणं पोष्यमाणश्च स तेन ववृधे मुने।
चकाराश्रमपर्य्यन्ते तृणानि गहनेषु सः ॥
दूरं गत्वा च शार्दूलत्रासादभ्याययौ पुनः।

प्रातर्गत्वा च दूरं च सायमायात् तथाश्रमम् ॥
पुनश्च भरतस्याभूदाश्रमस्योटजाजिरे ।
तस्य तस्मिन्महादूरे समीपपरिवर्त्तिनि ॥
आसीच्चेतः समासक्तं न यथा चान्यतो द्विज ।
विमुक्तराज्यतनयः प्रोज्झिताशेषबान्धवः ॥
ममत्वं स चकारोच्चैस्तस्मिन् हरिणबालके ।
किं वृकैर्भक्षितो व्याघ्रैः किं सिंहेन निपातितः ॥
चिरायमाने निःक्रान्ते तस्यासीदिति मानसम् ।
एषा वसुमती तस्य खुराग्रचतकर्बुरा ॥
प्रीतये मम तातोऽसौ क्व ममैणेयबालकः ।
विषाणाग्रेण मद्बाहुकण्डूयनपरो हि सः ॥
क्षेमेनाभ्यागतोऽरण्यादपि मां सुखयिष्यति ।
एते लूनशिखास्तस्य दशनैरचिरोद्गतैः ॥
कुशाः काशा विराजन्ते वटवः सामगा इव ।
इत्थं चिरगते तस्मिन् स चक्रे मानसं मुनिः ॥
प्रीतिप्रसन्नवदनः पार्श्वस्थे चाभवन्मृगे ।
समाधिभङ्गस्तस्यासीत् तन्मयत्वाद्धतात्मनः ॥
स त्यक्तराज्यभोगर्द्धिस्वजनस्यापि भूपतेः ।
चपले चपलन्तस्मिन् दूरगं दूरगामिनि ॥
मृगपोतेऽभवच्चित्तं स्थैर्यवत्तस्य भूपतेः ।
कलेन गच्छता सोऽपि कालं चक्रे महीपतिः ॥
पितेवासौ स पुत्त्रेण मृगपोतेन वीक्षितः ।
मृगमेव तदाऽद्राक्षीत् त्यजन् प्राणानसाविति ॥
तन्मयत्वेन मैत्रेय नान्यत् किञ्चिदचिन्तयन् ।

ततश्च तत्कालकृतां भावनां प्राप्य तादृशीम् ॥
जम्बूमार्गे महारण्ये जज्ञे जातिस्मरो मृगः ।
जातिस्मरत्वादुद्विग्नः संसारस्य द्विजोत्तम ॥
विहाय मातरं भूयः शालग्रामं तदा ययौ ।
पुष्पैस्तृणैस्तथा पर्णैस्तत् कुर्वन्नात्मपोषणम् ॥
मृगत्वहेतुभूतस्य कर्मणो निष्कृतिं ययौ ।
तत्र चोत्सृष्टदेहोऽसौ जज्ञे जातिस्मरो द्विजः ॥
सदाचारवतां शुद्धे योगिनां प्रवरे कुले ।
सर्वविज्ञानसम्पन्नः सर्वशास्त्रार्थतत्त्ववित् ॥
अपश्यत् स च मैत्रेय आत्मानं प्रकृतेः परम् ।
आत्मनोऽधिगतज्ञानो देवादीनि महामुने ॥
सर्वभूतान्यभेदेन स ददर्श महामुने ।
न पपाठ गुरुप्रोक्तां कृतोपनयनः श्रुतिम् ॥
न ददर्श च कर्माणि शास्त्राणि जगृहे न च ।
उक्तोऽपि बहुशः किञ्चिज्जडवद्वाक्यमब्रवीत् ॥
तदप्यसंस्कारयुतं ग्राम्यवाक्योक्तिसंयुतम् ।
अपध्वस्तवपुः सोऽथ मलिनाम्बरधृक् द्विजः ॥
क्लिन्नदन्तान्तरः सर्वैः परिभूतः स नागरैः ।
सम्माननापरां हानिं योगर्द्धेः कुरुते यतः ॥
जनेनावमतो योगी योगसिद्धिं च विन्दति ।
तस्माच्चरेत वै योगी सतां धर्ममदूषयन् ॥
जना यथावमन्येरन् गच्छेयुर्नैव सङ्गतिम् ।
हिरण्यगर्भवचनं विचिन्त्येत्थं महामतिः ॥
आत्मानं दर्शयामास जडोन्मत्ताकृतिं जने ।

भुङ्क्ते कल्माषवाचादि शाकं वन्यफलं कणान् ॥
यद्यदाप्नोति स बहु तदत्ति कालसंयुतम् ।
पितर्युपरते सोऽथ मातृभ्रातृव्यबान्धवैः ॥
कारितः क्षेत्रकर्माणि कुर्वन्नाहारपोषितः ।
स रौक्ष्यपीनावयवो जडकारी च कर्मणि ॥
सर्वलोकोपकरणं बभूवाहारवेतनः ।
त तादृशमसंस्कारं विप्राकृतिमचेष्टितम् ॥
क्षत्तासौ वीरराज्यस्य विष्टियोगममन्यत ।
स राजा शिबिकारूढो गन्तुं कृतमतिर्द्विज ॥
बभूवेक्षुमतीतीरे कपिलर्षेर्वराश्रमम् ।
श्रेयः किमत्र संसारे दुःखप्राये नृणामिह ॥
प्रष्टुं तं मोक्षधर्मज्ञं कपिलाख्यं महामुनिम् ।
उवाह शिबिकां तस्य क्षत्तृवचननोदितः ॥
नृणां विष्टिगृहीतानामन्येषां सोऽपि मध्यगः ।
गृहीतो विष्टिना विप्रः सर्वज्ञानैकभाजनम् ॥
जातिस्मरोऽसौ पापस्य क्षयकाम उवाह ताम् ।
ययौ जडगतिः सोऽथ युगमात्रावलोकनः ॥
कुर्वन्मतिमतां श्रेष्ठस्ते त्वन्ये त्वरितं ययुः ।
विलोक्य नृपतिः सोऽथ विषमां शिबिकागतिम् ॥
किमेतदित्याह समं गम्यतां शिबिकावहाः ।
पुनस्तथैव शिबिकां विलोक्य विषमां हि सः ॥
नृपः किमेतदित्याह भवद्भिर्गम्यतेऽन्यथा ।
भूपतेर्वदतस्तस्य श्रुत्वेत्थं बहुशो वचः ॥
शिबिकोद्वाहकाः प्रोचुरयं यातीत्यसत्वरम् ।

राजोवाच ।

किं श्रान्तः स्वल्पमध्वानं त्वयोढा शिबिका मम ।
किमायाससहो न त्वं पीवानसि निरीक्ष्यते ॥

ब्राह्मण उवाच ।

नाहं पीवा न वै वोढा शिबिकामध्वनो मया ।
न श्रान्तोऽस्मि न वायासः सोढव्योऽस्ति महीपते ॥

राजोवाच ।

प्रत्यक्षं दृश्यते पीवा नाधायि शिबिका त्वयि ।
श्रमश्च भारोद्वहने भवत्येव हि देहिनाम् ॥

ब्राह्मण उवाच ।

प्रत्यक्षं भवता भूप यद् दृष्टं तद्वद प्रभो ।
बलवानबलश्चेति वाच्यं पश्चाद्विशेषणम् ॥
त्वयोढा शिबिका चेति त्वय्यधायि च संस्थिता ।
मिथ्यैतदप्यत्र भवान् शृणोतु वचनं मम ॥
भूमौ पादयुगस्यास्या जङ्घे पादद्वये स्थिते ।
ऊरू जङ्घाद्वयावस्थौ तदाधारं तथोदरम् ॥
वक्षःस्थलं तथा बाहू स्कन्धौ चोदरसंश्रितौ ।
स्कन्धाश्रितेयं शिबिका मम भारोऽत्र किं कृतः ॥
शिबिकायां स्थितश्चायं देहस्त्वदुपलक्षितः ।
तत्र त्वमहमप्यत्र प्रोच्यते चेदमन्यथा ॥
अहं त्वं च तथाऽन्ये च भूतैरुह्याम पार्थिव ।
गुणप्रवाहपतितो भूतवर्गोऽपि यात्ययम् ॥
कर्मवश्या गुणा ह्येते सत्त्वाद्याः पृथिवीपते ।
अविद्यासञ्चितं कर्म तच्चाशेषेषु जन्तुषु ॥

आत्मा शुद्धोऽक्षरः शान्तो निर्गुणः प्रकृतेः परः ।
प्रवृद्ध्यपचयौ नास्य एकस्याखिलजन्तुषु ॥
यदा नोपचयस्तस्य न चैवापचयो नृप ।
तदा पीवानसीतीत्थं कया युक्त्या त्वयेरितम् ॥
भूपादजङ्घाकट्यूरुजठरादिषु संस्थिता ।
शिबिकेयं तव स्कन्धे तथा भारः समस्त्वया ॥
तथाऽन्यैर्जन्तुभिर्भूपः शिबिकोढ्या न केवलम् ।
शैलद्रुमगृहोत्थोऽपि पृथिवीसम्भवोऽपि च ॥
यदा पुंसः पृथग्भावः प्राकृतैः कारणैर्नृप ।
सोढव्यस्तु तदायासः कतमो नृपते मया ॥
यद्द्रव्या शिबिका चेयं यद्द्रव्यो भूतसंग्रहः ।
भवतो मेऽखिलस्यापि ममत्वेनोपबृंहितः ॥

परासर उवाच ।

एवमुक्त्वाऽभवन्मौनी स वहन् शिबिकां द्विज ।
सोऽपि राजावतीर्य्यैवं तत्पादौ जगृहे त्वरन् ॥

राजोवाच ।

भो भो विसृज्य शिबिकां प्रसादं कुरु मे द्विज ।
कथ्यतां को भवानत्र जाल्मरूपधरः स्थितः ॥
यो भवान् यन्निमित्तञ्च यदागमनकारणम् ।
तत् सर्वं कथ्यतां ब्रह्मन् मह्यं शुश्रूषवे यथा ॥

ब्राह्मण उवाच ।

श्रूयतां कोऽहमित्येतद्वक्तुं भूप न शक्यते ।
उपभोगनिमित्तं च सर्वत्रागमनक्रिया ॥
सुखदुःखोपभोगैस्तु तौ देहाद्युपपादकौ ।

धर्माधर्मोद्भवो भोक्तुं जन्तुर्देहादिमृच्छति ॥
सर्वस्यैव हि भूपाल जन्तोः सर्वस्य कारणम् ।
धर्माधर्मौ यतस्तस्मात् कारणं पृच्छ्यते कुतः ॥

राजोवाच ।

धर्माधर्मौ न सन्देहः सर्वकार्येषु कारणम् ।
उपभोगनिमित्तंच देहदेशान्तरागमः ॥
यत्त्वेतद्भवता प्रोक्तं कोऽहमित्येतदात्मनः ।
वक्तुं न शक्यते श्रोतुं तन्मनो मे प्रवर्त्तते ॥
योऽस्मि सोऽहमिति ब्रह्मन् कथं वक्तुं न शक्यते ।
आत्मन्येष न दोषाय शब्दोऽहमिति यो द्विज ॥

ब्राह्मण उवाच ।

शब्दोऽहमिति दोषाय नात्मन्येष तथैव तत् ।
अनात्मन्यात्मविज्ञानशब्दो वा भ्रान्तिलक्षणः ॥
जिह्वा ब्रवीत्यहमिति दन्तोष्ठौ तालुकं नृप ।
एते नाहं यतः सर्वे वाङ्निष्पादनहेतवः ॥
किं हेतुभिर्वदत्येषा वागेवाहमिति स्वयम् ।
तथापि वाग् नाहमेतद् वक्तुमित्थं न युज्यते ॥
पिण्डः पृथग् यतः पुंसः शिरःपाण्यादिलक्षणः ।
ततोऽहमिति कुत्रैतां संज्ञां राजन् करोम्यहम् ॥
यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम ।
तदेषोऽहमयं वाऽन्यो वक्तुमेवमपीष्यते ॥
यदा समस्तदेहेषु पुमानेको व्यवस्थितः ।
तदा हि को भवान् कोऽहमित्येतद्विफलं वचः ॥
त्वं राजा शिबिका चेयं वयं वाहाः पुरःसराः ।

अयं च भवतो लोको न सदेतन्नृपोच्यते ॥
वृक्षाद्दारु तथा चेयं शिबिका त्वदधिष्ठिता ।
क्व वृक्षसंज्ञा जाताऽस्या दारुसंज्ञाऽथवा नृप ॥
वृक्षारूढो महाराजो नायं वदति ते जनः ।
न च दारुणि सर्वस्त्वां ब्रवीति शिबिकागतम् ॥
शिबिका दारुसङ्घातो रचनास्थितिसंस्थितिः ।
अन्विष्यतां नृपश्रेष्ठ तद्भेदे शिबिका त्वया ॥
एवं छत्रशलाकानां पृथग्भावो विमृश्यताम् ।
क्व जातं छत्रमित्येष न्यायस्त्वयि तथा मयि ॥
पुमांस्त्री गौरयं वाजी कुञ्जरो विहगस्तरुः ।
देहेषु लोकसंज्ञेयं विज्ञेया कर्महेतुषु ॥
पुमान्न देवो न नरो न पशुर्न च पादपः ।
शरीराकृतिभेदास्तु भूपैते कर्मयोनयः ॥
वस्तु राजेति यल्लोके यच्च राजभटात्मकम् ।
तथाऽन्यच्च नृपेत्येतदसत्सङ्कल्पमानसम् ॥
तत्तु कालान्तरेणापि नान्यां संज्ञामुपैति वै ।
परिणामादिसम्भूतं यद्वस्तु नृप तच्च किम् ॥
त्वं राजा सर्वलोकस्य पितुः पुत्रो रिपो रिपुः ।
पत्न्याः पतिः पिता सूनोः किं त्वां भूयो वदाम्यहम् ॥
किं त्वमेतच्छिरः किंतु शिरस्तव तथोदरम् ।
किमु पादादि किञ्चैतत् किं त्वं ब्रूहि महीपते ॥
समस्तावयवेभ्यस्त्वं पृथग्भूय व्यवस्थितः ।
कोऽहमित्येतन्निपुणो भूत्वा चिन्तय पार्थिव ॥

एवं व्यवस्थिते तत्त्वे मयाऽहमिति भाषितम् ॥
पृथक्करणनिष्पाद्यं शक्यते नृपते कथम् ।

पराशर उवाच ।

निशम्यैतस्येति वचः परमार्थसमन्वितम् ।
प्रश्रयावनतो भूत्वा तमाह नृपतिर्द्विजम् ॥

राजोवाच ।

भगवन् यत्त्वया प्रोक्तं परमार्थमयं वचः ।
श्रुते तस्मिन् भ्रमन्तीव मनसो मम वृत्तयः ॥
एतद्विवेकविज्ञानं यदशेषेषु जन्तुषु ।
भवता दर्शितं विप्र तत् परं प्रकृतेर्महत् ॥
नाहं वहामि शिबिकां शिबिका न मयि स्थिता ।
शरीरमन्यदस्मत्तो येनेयं शिबिका धृता ॥
गुणप्रवृत्त्या भूतानां प्रकृतिः कर्मनोदिता ।
प्रवर्तन्ते गुणाश्चैते किं मयेति त्वयोदितम् ॥
एतस्मिन् परमार्थज्ञ मम श्रोत्रपथं गते ।
मनो विह्वलतामेति परमार्थार्थितां गतम् ॥
पूर्वमेव महाभागं कपिलर्षिमहं द्विज ।
प्रष्टुमभ्युद्यतो गत्वा श्रेयः किं त्वत्र संशये ॥
तदन्तरे च भवता यदिदं वाक्यमीरितम् ।
तेनैव परमार्थार्थं त्वयि चेतः प्रधावति ॥
कपिलर्षेर्भगवतः सर्वभूतस्य वै द्विज ।
विष्णोरंशो जगन्मोहनाशायोर्वीमुपागतः ॥
स एव भगवान्नूनमस्माकं हितकाम्यया ।
प्रत्यक्षतां मम गतो यथैतद्भवतोच्यते ॥

४॥

तस्मह्यं प्रणताय त्वं यच्छ्रेयः परमं द्विज ।
तद्वदाखिलविज्ञानजलवीच्युदधिर्भवान् ॥

ब्राह्मण उवाच ।

भूयः पृच्छसि किं श्रेयः परमार्थं न पृच्छसि ।
श्रेयांस्यपरमार्थानि अशेषाणि च भूपते ॥
देवताराधनं कृत्वा धनसम्पदमिच्छसि ।
पुत्रानिच्छति राज्यं च श्रेयस्तस्यासिकारणम् ॥
कर्म यज्ञात्मकं श्रेयः स्वर्लोकफलदायि यत् ।
श्रेयः प्रधानं च फले तदेवानाभिसन्ध्यते ॥
आत्मा ध्येयः सदा भूप योगयुक्तैस्तथापरम् ।
विवेकिनस्तु संयोगः श्रेयोऽसौ परमात्मनः ॥
श्रेयांस्येवमनेकानि शतशोऽथ सहस्रशः ।
सन्त्यत्र परमार्थास्तु न त्वेते श्रूयतां च मे ॥
धर्माय त्यजते किं तु परमार्थो धनं यदि ।
व्ययश्च क्रियते कस्मात् कामप्राप्त्युपलक्षणः ॥
पुत्रश्चेत् परमार्थः स्यात् सोऽप्यन्यस्य नरेश्वर ।
परमार्थभूतः सोऽन्यस्य परमार्थो हि तत्पिता ॥
एवं न परमार्थो हि जगत्यत्र चराचरे ।
परमार्थो हि कार्याणि कारणानामशेषतः ॥
राज्यादिप्राप्तिरत्रोक्ता परमार्थतया यदि ।
परमार्था भवन्त्यत्र न भवन्ति च वै ततः ॥
ऋग्यजुःसामनिष्पाद्यं यज्ञकर्म मतं तव ।
परमार्थभूतं तत्रापि श्रूयतां गदतो मम ॥
यत्तु निष्पाद्यते कार्यं मृदा कारणभूतया ।

तत्कारणानुगमनाज्जायते नृप तन्मयम् ॥
एवं त्रिनाग्निभिर्द्रव्यैः समिदाज्यकुशादिभिः ।
निष्पाद्यते क्रिया या तु सा भवित्री त्रिनाग्निनी ॥
अविनाशी परमार्थः प्राज्ञैरभ्युपगम्यते ।
तत्तु नाशि न सन्देहो नाशिद्रव्योपपादितम् ॥
तदेवाफलदं कर्म परमार्थो मतस्तव ।
मुक्तिसाधनभूतत्वात् परमार्थो न साधनम् ॥
ध्यानं चैवात्मनो भूप परमार्थार्थशब्दितम् ।
भेदकारि परेभ्यस्तत् परमार्थो न भेदवान् ॥
परमात्मात्मनोर्योगः परमार्थ इतीष्यताम् ।
मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां गतम् ॥
तस्माच्छ्रेयांस्यशेषाणि नृपैतानि न संशयः ।
परमार्थस्तु भूपाल संक्षेपाच्छ्रूयतां मम ॥
एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः ।
जन्मवृद्ध्यादिरहित आत्मा सर्वगतोऽव्ययः ॥
परं ज्ञानमयो सद्भिर्नामजात्यादिभिर्विभुः ।
न योगवान्न युक्तोऽभून्नैव पार्थिव युज्यते ॥
तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत् ।
विज्ञानं परमार्थोऽसौ द्वैतिनोऽतत्त्वदर्शिनः ॥
वेणुरन्ध्रविभेदेन भेदः षड्जादिसञ्ज्ञितः ।
अभेदव्यापिनो वायोर्यथा तस्य महात्मनः ॥
एकत्वं रूपभेदश्च बाह्यकर्मप्रवृत्तिजः ।
देवादिभेदेऽपध्वस्ते नास्त्येवावरणो हि सः ॥
सर्वभूतान्यभेदेन यथैकं दृश्यते नभः ।

भ्रान्तदृष्टिभिरात्माऽपि तथैकः सन् पृथक् पृथक् ॥
एकः समस्तं यदिहास्ति किञ्चित्तदुच्यते नास्ति परं ततोऽन्यत्।
सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ॥

पराशर उवाच।

इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्ट्या।
स चापि जातिस्मरणप्रबोधस्तत्रैव जन्मन्यपवर्गमाप ॥
इति भरतनरेन्द्रसारभूतं कथयति यश्च शृणोति भक्तियुक्तः।
स विमलमतिरेति नात्ममोहं भवति च संसरणेषु मुक्तियोग्यः ॥
इति विष्णुपुराणोक्तं भरतचरितम् ॥

पराशर उवाच।

प्रियव्रतोत्तानपादौ मनोः स्वायम्भुवस्य तु।
द्वौ पुत्रौ सुमहावीर्यौ धर्मज्ञौ कथितौ द्विज ॥
तयोरुत्तानपादस्य सुरुच्यामुत्तमः सुतः।
अभीष्टायामभूद् ब्रह्मन् पितुरत्यन्तवल्लभः ॥
सुनीतिर्नाम या राज्ञस्तस्याऽभून्महिषी द्विज।
स नातिप्रीतिमांस्तस्यां तस्याश्चाभूद् ध्रुवः सुतः ॥
राजासनस्थितस्याङ्कं पितुर्भ्रातरमाश्रितम्।
दृष्ट्वोत्तमं ध्रुवश्चक्रे तमारोढुं मनोरथम् ॥
प्रत्यक्षं भूपतिस्तं तु सुरुच्या नाभ्यनन्दत।
प्रणयेनागतं पुत्रमुत्सङ्गारोहणोत्सुकम् ॥
सपत्नीतनयं दृष्ट्वा तमङ्कारोहणोत्सुकम्।
पितुः पुत्रं तथारूढं सुरुचिर्वाक्यमब्रवीत् ॥
क्रियते किं त्वया वत्स महानेव मनोरथः।
अन्यस्त्रीगर्भजातेन ह्यसम्भूय ममोदरे ॥

उत्तमोत्तममप्राप्यमविवेकी त्वमिच्छसि ।
सत्यं सुतस्त्वमप्यस्य किन्तु न त्वं मया धृतः ॥
एतद्राजासनं सर्वं भूभृत्संश्रयकेतनम् ।
योग्यं ममैव पुत्त्रस्य किमात्मा क्लिश्यते त्वया ॥
उच्चैर्मनोरथस्तेऽयं मत्पुत्त्रस्येव किं वृथा ।
सुनीत्यामात्मनो जन्म किं त्वया नावगम्यते ॥

पराशर उवाच ।

उत्सृज्य पितरं बालस्तच्छ्रुत्वा मातृभाषितम् ।
जगाम कुपितो मातुर्निजाया द्विज मन्दिरम् ॥
तं दृष्ट्वा कुपितं पुत्त्रमीषत्प्रस्फुरिताधरम् ।
सुनीतिरङ्कमारोप्य मैत्रेय तदभाषत ॥

सुनीतिरुवाच ।

वत्स कः कोपहेतुस्ते कश्च त्वां नाभिनन्दति ।
कोऽवजानाति पितरं तव यश्चापराध्यति ॥

पराशर उवाच ।

इत्युक्तः सकलं मात्रे कथयामास तद्यथा ।
सुरुचिः प्राह भूपालप्रत्यक्षमतिगर्विता ॥
निश्वस्य कथिते तस्मिन् साति पुत्त्रेण दुर्मनाः ।
श्वासक्षामेक्षणा दीना सुनीतिर्वाक्यमब्रवीत् ॥

सुनीतिरुवाच ।

सुरुचिः सत्यमाहेदं स्वल्पभाग्योऽसि पुत्त्रक ।
न हि पुण्यवतां वत्स सपत्नैरेवमुच्यते ॥
नोद्वेगस्तात कर्त्तव्यः कृतं यद्भवता पुरा ।
तत् कोऽपहर्त्तुं शक्नोति दातुं कश्चाकृतं त्वया ॥
राजासनं तथा छत्त्रं वराश्वा वरवारणाः ।

यस्य पुण्यवतां वत्स निलयस्थै तेमलैतच्छाम्य पुत्तक ? ॥
अन्यजन्मकृतैः पुण्यैः सुरुच्यां सुरुचिर्नृपः ।
भार्येति प्रोच्यते त्वन्या मद्विधा पुण्यवर्जिता ॥
गुणोपचयसंपन्नस्तस्याः पुत्त्रस्तथोत्तमः ।
मम पुत्त्रस्तथा जातः स्वल्पपुण्यो ध्रुवो भवान् ॥
तथापि दुःखं न भवान् कर्त्तुमर्हति पुत्तक ।
यस्य यावत् स तेनैव स्वेन तुष्यति बुद्धिमान् ॥
यदि वै दुःखमत्यन्तं सुरुच्या वचसा तव ।
तत्पुण्योपचये यत्नं कुरु सर्वफलप्रदे ॥
सुशीलो भव धर्मात्मा मैत्रः प्राणिहिते रतः ।
निम्नं यथापः प्रवणा पात्रमायान्ति सम्पदः ॥

ध्रुव उवाच ।

अम्ब यत्त्वमिदं प्राह प्रशमाय वचो मम ।
नैतद् दुर्वचसा भिन्ने हृदये मम तिष्ठति ॥
सोऽहं तथा यतिष्यामि यथा सर्वोत्तमोत्तमम् ।
स्थानं प्राप्स्याम्यशेषाणां जगतामपि पूजितम् ॥
सुरुचिर्दयिता राज्ञस्तस्या जातोऽस्मि नोदरात् ।
प्रतापं पश्यसे त्वं च वृद्धस्यापि तवोदरे ॥
उत्तमः स च मे भ्राता यो गर्भे न धृतस्त्वया ।
स राजासनमाप्नोतु पित्रा दत्तं यथासुखम् ॥
नान्यदत्तमभीप्सामि स्थानमम्ब स्वकर्मणा ।
इच्छामि तदहं स्थानं यन्न प्राप पितामहः ॥

पराशर उवाच ।

निर्जगाम गृहान्मातुरित्युक्त्वा मातरं ध्रुवः ।

पुराच्च निर्गम्य ततस्तद्बाह्योपवनं ययौ ॥
स ददर्श मुनींस्तत्र सप्त पूर्वगतान् ध्रुवः ।
कृष्णाजिनोत्तरीयेषु विष्टरेषु समन्वितान् ॥
राजपुत्त्रस्ततः सर्व्वान् प्रणिपत्याभ्यभाषत ।
प्रश्रयावनतः सम्यगभिवादनपूर्व्वकम् ॥

ध्रुव उवाच ।

उत्तानपादस्य तनयं मान्निबोधत सत्तमाः ।
जातं सुनीत्यां निर्वेदात् युष्माकं प्राप्तमन्तिकम् ॥

ऋषय ऊचुः ।

ननु पञ्चाब्दसंभूतो बालस्त्वं नृपनन्दन ।
निर्वेदकारणं किञ्चित्तव नाद्यापि वर्त्तते ॥
न चिन्त्यं भवतः किञ्चिद्ध्रियते भूपतिः पिता ।
न चैवेष्टवियोगाधिं तव पश्यामि बालक ॥
शरीरे न च ते व्याधिरस्माभिरुपलक्ष्यते ।
निर्वेदः किन्निमित्तस्ते कथ्यतां यदि विद्यते ॥

पराशर उवाच ।

ततः स कथयामास सुरुच्या यदुदाहृतम् ।
तन्निशम्य ततः प्रोचुर्मुनयस्ते परस्परम् ॥

ऋषय ऊचुः ।

अहो क्षात्त्रं परं तेजो बालस्यापि यदक्षमा ।
सपत्न्या मातुरुक्तस्य हृदयान्नापसर्पति ॥
भो भो क्षत्त्रिय दायादनिर्वेदाद्यत्त्वयाऽधुना ।
कर्त्तुं व्यवसितं तन्नः कथ्यतां यदि रोचते ॥
यच्च कार्य्यं तवास्माभिः साहाय्यममितद्युते ।

तदुच्यतां विवक्षुस्त्वमस्माभिरुपलक्ष्यसे ॥

ध्रुव उवाच ।

नाहमर्थमभीप्सामि न राज्यं द्विजसत्तमाः ।
तत्स्थानमेकमिच्छामि भुक्तं नान्येन यत् पुरा ॥
एतन्मे क्रियतां सम्यक् कथ्यतां प्राप्यते यथा ।
स्थानमग्र्यं समस्तेभ्यः स्थानेभ्यो मुनिसत्तमाः ॥

मरीचिरुवाच ।

अनाराधितगोविन्दैर्नरैः स्थानं नृपात्मज ।
न हि संप्राप्यते श्रेष्ठं तस्मादाराधयाच्युतम् ॥

अत्रिरुवाच ।

परः पराणां पुरुषो यस्य तुष्टो जनार्दनः ।
स प्राप्नोत्यक्षयं स्थानमेतत् सत्यं मयोदितम् ॥

अङ्गिरा उवाच ।

यस्यान्तः सर्वमेवेदमच्युतस्याव्ययात्मनः ।
तमाराधय गोविन्दं स्थानमग्र्यं यदीच्छसि ॥

पुलस्त्य उवाच ।

परं ब्रह्म परं धाम यो ऽसौ ब्रह्म तथा परम् ।
तमाराध्य हरिं देवं मुक्तिं प्राप्नोति दुर्लभाम् ॥

क्रतुरुवाच ।

यो यज्ञपुरुषो ध्येयः परमः पुरुषः पुमान् ।
तस्मिंस्तुष्टे न वा प्राप्यं किञ्चिदस्ति जनार्दने ॥

पुलह उवाच ।

ऐन्द्रमिन्द्रः परं स्थानं यमाराध्य जगत्पतिम् ।
प्राप यज्ञपतिं विष्णुं तमाराधय सुव्रत ॥

वसिष्ठ उवाच।

प्राप्नोत्याराधिते विष्णौ मनसा यद्यदिच्छति।
त्रैलोक्यस्यानन्तरं स्थानं किमु वत्सोत्तमोत्तमम्॥

ध्रुव उवाच।

आराध्यः कथितो देवो भवद्भिः प्रणतस्य मे।
मया तत्परितोषाय यज्जप्तव्यं तदुच्यताम्॥
अथवाराधनं तस्य मया कार्यं महात्मनः।
प्रसादस्तुमुखास्तन्मे कथयन्तु महर्षयः॥

ऋषय ऊचुः।

राजपुत्र यथा विष्णोराराधनपरैर्नरैः।
कार्यमाराधनं तन्नो यथावच्छ्रोतुमर्हसि॥
बाह्यार्थानखिलांश्चित्तात्त्यजेत् प्रथमं नरः।
तस्मिन्नेव जगद्धाम्नि ततः कुर्वीत निश्चयम्॥
एवमेकाग्रचित्तेन तन्मयेन धृतात्मना।
जप्तव्यं तन्निबोधैतत्तत्र पार्थिवनन्दन॥
हिरण्यगर्भपुरुषप्रधानाव्यक्तरूपिणे।
ॐ नमो वासुदेवाय शुद्धज्ञानस्वभाविने॥
एतज्जजाप भगवान् जाप्यं स्वायंभुवो मनुः।
पितामहस्तव पुरा तस्य तुष्टो जनार्दनः॥
ददौ यथाभिलषितामृद्धिं त्रैलोक्यदुर्लभाम्।
तथा त्वमपि गोविन्दं तोषयैतत् सदा जपन्॥

पराशर उवाच।

निशम्य तदशेषेण मैत्रेय नृपतेः सुतः।
निर्जगाम वनात्तस्मात् प्रणिपत्य स तानृषीन्॥

कृतकृत्यमिवात्मानं मन्यमानस्ततो द्विज ।
मधुसंज्ञं महापुण्यं जगाम यमुनातटम् ॥
पुनश्च मधुसञ्ज्ञेन दैत्येनाधिष्ठितं यतः ।
ततो मधुवनं नाम्ना ख्यातमत्र महीपते ॥
हत्वा च लवणं रक्षो मधुपुत्रं महाबलम् ।
शत्रुघ्नो मथुरां नाम पुरीं तत्र चकार वै ॥
यत्र वै देवदेवस्य सान्निध्यं हरिमेधसः ।
सर्वभूतगतो विप्र सर्वभागवतो भवन् ॥
मनस्यवस्थिते विष्णौ तस्य मैत्रेय योगिनः ।
अनन्यचेतसस्तस्य ध्यायतो भगवान् हरिः ॥
सर्वपापहरे तस्मिंस्तपस्तीर्थे चकार वै ।
मरीचिमिश्रैर्मुनिभिर्यथोद्दिष्टमभूत् पुरा ॥
आत्मन्यशेषदेवेशं विष्णुममन्यत ? ।
न शशाक धराभारमुद्वोढुं भूतधारिणी ॥
वामपादस्थिते तस्मिन्ननामार्द्धेन मेदिनी ।
द्वितीयं च ननामार्द्धं क्षितिर्दक्षिणसंस्थिते ॥
पादाङ्गुष्ठेन सम्पीड्य यदाऽसौ वसुधां स्थितः ।
तदा समस्ता वसुधा चचाल सह पर्वतैः ॥
नद्यो नदाश्च समुद्राश्च संक्षोभं परमं ययुः ।
तत्क्षोभादमराः क्षोभं परं जग्मुर्महामुने ॥
यामा नाम तदा देवा मैत्रेय परमाकुलाः ।
इन्द्रेण सह सङ्गम्य ध्यानभङ्गं प्रचक्रमुः ॥
कूष्माण्डा विविधैरूपैस्सहेन्द्रेण महामुने ।
समाधिभङ्गमत्यन्तमारब्धाः कर्तुमासुराः ॥

सुनीतिर्नाम तन्माता साक्षात्तत्पुरतः स्थिता ।
पुत्त्रेति करुणां वाचमाह मायामयी तदा ॥
पुत्त्रकाऽस्मान्निवर्तस्व शरीरव्ययदारुणात् ।
निर्बन्धतो मया लब्धो बहुभिस्त्वं मनोरथैः ॥
दीनामेकां परित्यक्तुमनाथां न त्वमर्हसि ।
सपत्नीवचनाद्वत्स अगतेस्त्वं गतिर्मम ॥
क्व च त्वं पञ्चवर्षीयः क्व च त्वं दारुणं तपः ।
निवर्त्ततां मनः कष्टान्निर्बन्धात् फलवर्जितात् ॥
कालः क्रीडनकालस्ते तथैवाध्ययनस्य च ।
ततः समस्तभोगानां तदन्ते चेष्यते तपः ॥
कालः क्रीडनकालानां यस्तवकालस्य पुत्त्रक ।
तस्मिंस्त्वमित्थं तपसि किं नाशायात्मनो रतः ॥
मत्प्रीतिः परमं धर्मं वयोवस्थाक्रियाक्रमम् ।
अनुवर्तस्व मामोहं निवर्तास्मादधर्मतः ॥
परित्यजति वत्साद्य यद्येतन्न भवांस्तपः ।
त्यक्ष्याम्यहमिति प्राणान् स्वांस्तु वै पश्यतस्तव ॥

पराशर उवाच ।

तां विलापवतीमेवं बाष्पाविलविलोचनाम् ।
समाहितमना विष्णौ पश्यन्नपि न पश्यति ॥
वत्स वत्स सुघोराणि रक्षांस्येतानि भीषणे ।
वने ऽभ्युद्यतशस्त्राणि समायान्त्यपगम्यताम् ॥
इत्युक्त्वा प्रययौ साथ रक्षांस्याविर्बभुस्ततः ।
अभ्युद्यतोग्रशस्त्राणि ज्वालामालाकुलैर्मुखैः ॥
ततो नादानतीवोग्रान् राजपुत्त्रस्य ते पुरः ।

मुमुचुर्दीप्तशस्त्राणि भ्रामयन्तो निशाचराः॥
शिवाश्च शतशो नेदुः सज्वालकवलैर्मुखैः।
त्रासाय तस्य बालस्य योगयुक्तस्य सर्वतः॥
हन्यतां हन्यतामेष छिद्यताञ्छिद्यतामयम्।
भच्यतां भच्यतामेष इत्यूचुस्ते निशाचराः॥
ततो नानाविधान्नादान् सिंहोष्ट्रमकराननाः।
त्रासाय राजपुत्त्रस्य नेदुस्ते रजनीचराः॥
रक्षांस्येतानि ते नादाः शिवास्तान्यायुधानि च।
गोविन्दासक्तचित्तस्य ययुर्नेन्द्रियगोचरम्॥
एकाग्रचेताः सततं विष्णुमेवात्मसंश्रयम्।
दृष्टवान् पृथिवीनाथपुत्त्रो नान्यत् कथञ्चन॥
ततः सर्वासु मायासु विलीनासु पुनः सुराः।
संक्षोभं परमं जग्मुस्तत्पराभवशङ्किताः॥
ते समेत्य जगद्योनिमनादिनिधनं हरिम्।
शरण्यं शरणं जातास्तपसा तस्य तापिताः॥

देवा ऊचुः।

देवदेव जगन्नाथ परेश पुरुषोत्तम।
ध्रुवस्य तपसा तप्तास्त्वां वयं शरणं गताः॥
दिने दिने कलाशेषैः शशाङ्कः पूर्यते यथा।
तथाऽयं तपसा देव प्रयात्यृद्धिमहर्निशम्॥
औत्तानपादिस्तपसा वयमित्थं जनार्दन।
भीतास्त्वां शरणं यातास्तपसस्तन्निवर्तय॥
न विद्मः किं स शक्रत्वं किं सूर्यत्वमभीप्सति।
वित्तपाम्बुपसोमानां साभिलाषः पदेषु किम्॥

तदस्माकं प्रसीदेश हृदयाच्छल्यमुद्धर।
उत्तानपादतनयं तपसस्त्वं निवर्तय॥

भगवानुवाच।

नेन्द्रत्वं न च सूर्यत्वं नैवाम्बुपधनेशताम्।
प्रार्थयत्येष यं कामं त करोम्यखिलं सुराः॥
यात देवा यथाकामं स्वस्थानं विगतज्वराः।
निवर्तयाम्यहं बालं तपसासक्तमानसम्॥

पराशर उवाच।

इत्युक्ता देवदेवेन प्रणम्य त्रिदशास्ततः।
प्रययुः स्वानि धिष्ण्यानि शतक्रतुपुरोगमाः॥
भगवानपि सर्वात्मा तन्मयत्वेन तोषितः।
गत्वा ध्रुवमुवाचेदं चतुर्भुजवपुर्हरिः॥

भगवानुवाच।

औत्तानपादे भद्रं ते तपसा परितोषितः।
वरदोऽहमनुप्राप्तो वरं वरय सुव्रत॥
बाह्यार्थनिरपेक्षं ते मयि चित्तं यदाहितम्।
तुष्टोऽहं भवतस्तेन तद्वृणीष्व वरं परम्॥

पराशर उवाच।

श्रुत्वेत्थं गदितं तस्य देवदेवस्य बालकः।
उन्मीलिताक्षो ददृशे ध्यानदृष्टं हरिं पुरः॥
शङ्खचक्रगदाशार्ङ्गवरासिधरमच्युतम्।
रोमाञ्चिताङ्गः सहसा साध्वसं परमं गतः॥
स्तवाय देवदेवस्य स चक्रे मानसं ध्रुवः।
किं वदामि स्तुतावस्य केनोक्तेनास्य संस्तुतिः॥

इत्याकुलमतिर्दैवं तमेव शरणं ययौ ॥

ध्रुव उवाच ।

भगवन् यदि मे तोषं तपसा परमं गतः ।
स्तोतुं तदहमिच्छामि वरमेनं प्रयच्छ मे ॥

पराशर उवाच ।

शङ्खप्रान्तेन गोविन्द वेदान्तैर्गीयते यस्य नो गतिः ? ।
तं त्वां कथमहं बालस्तोतुं शच्यामि बालक ॥
त्वद्भक्तिप्रवणं ह्येतत् परमेश्वर मे मनः ।
स्तोतुं प्रवृत्तं त्वत्पादौ तत्र प्रज्ञां प्रयच्छ मे ॥

पराशर उवाच ।

शङ्खप्रान्तेन गोविन्दस्तं पस्पर्श कृताञ्जलिम् ।
उत्तानपादतनयं द्विजवर्य जगत्पतिः ॥
अथ प्रसन्नवदनस्तत्क्षणान्नृपनन्दनः ।
तुष्टाव प्रणतो भूत्वा भूतधातारमच्युतम् ॥

ध्रुव उवाच ।

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
भूतादिरादिप्रकृतिर्यस्य रूपं नतोऽस्मि तम् ॥
शुद्धः सूक्ष्मोऽखिलव्यापी प्रधानात् परतः पुमान् ।
यस्य रूपं नमस्तस्मै पुरुषाय गुणात्मने ॥
भूतादीनां समस्तानां गन्धादीनां च शेषतः ।
बुद्ध्यादीनां प्रधानस्यः पुरुषस्य च यः परः ॥
त्वं ब्रह्मरूपमात्मानमशेषजगतः परम् ।
प्रपद्ये शरणं शुद्धं त्वद्रूपं परमेश्वर ॥
बृहत्त्वाद् बृंहणत्वाच्च यद्रूपं ब्रह्मसञ्ज्ञितम् ।

तस्मै नमस्ते ब्रह्मात्मन् योगिभिश्चिन्त्योऽविकारिणे ॥
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥
सर्वव्यापी भुवः स्पर्शादत्यतिष्ठद्दशाङ्गुलम् ।
यद्रूपं यच्च वै भाव्यं पुरुषाख्यं हि तद्भवान् ॥
त्वत्तो विराट् स्वराट् सम्राट् त्वत्तश्चाप्यधिपूरुषः ।
अत्यरिच्यत सोऽधश्च तिर्यक् चोर्द्ध्वं च वै भुवः ॥
त्वत्तो विश्वमिदं सर्वं त्वत्तो भूतभविष्यती ।
त्वद्रूपधारिणस्त्वत्तः सर्वभूतादिदं जगत् ॥
त्वत्तो यज्ञाः समुद्भूताः पृषदाज्यं पशुर्द्दिधा ।
त्वत्तो ऋचोऽथ सामानि त्वत्तश्छन्दांसि जज्ञिरे ॥
त्वत्तो यजूंष्यजायन्त त्वत्तो ऽश्वाश्चैकतोदतः ।
गावस्त्वत्तः समुद्भूतास्त्वत्तोऽजास्त्ववयो मृगाः ॥
त्वन्मुखाद्ब्राह्मणा बाह्वोस्त्वत्तः क्षत्रमजायत ।
वैश्यास्तवोरुजास्त्वत्तः पद्भ्यां शूद्राः समुत्थिताः ॥
अक्ष्णोः सूर्योऽनिलः श्रोत्राच्चन्द्रमा मनसस्तव ।
प्राणोऽन्तःसुषिराज्जातो मुखादग्निरजायत ॥
नाभितो गगनं द्यौश्च शिरसः समवर्त्तत ।
दिशः श्रोत्रात् क्षितिः पद्भ्यां त्वत्तः सर्वमभूदिदम् ॥
न्यग्रोधः सुमहानल्पे यथा बीजे व्यवस्थितः ।
संयमे विश्वमखिलं बीजभूते तथा त्वयि ॥
बीजादङ्कुरसंभूतो न्यग्रोधः समुपस्थितः ।
विस्तारं च यथा याति त्वत्तः सृष्टौ जगत् तथा ॥
यथा च कदलीनाम्नां त्वक्पत्रायथ दृश्यते ।
एवं विश्वस्य नान्यस्त्वं त्वत्स्थानीश्वर दृश्यते ॥

ह्लादिनी सन्धिनी सापि त्वय्येका सर्वसंस्थितौ।
ह्लादतापकरी मिश्रा त्वयि नो गुणमिश्रिते॥
पृथग्भूतैकभूताय भूतभूताय ते नमः।
प्रभूतभूतभूताय तुभ्यं भूतात्मने नमः।
व्यक्तप्रधानपुरुषविराट् स्वराट् सम्राट् तथा॥
विभात्यक्षेऽन्तःकरणैः पुरुषेष्वक्षरो भवान्।
सर्वस्मिन् सर्वभूतस्त्वं सर्वः सर्वस्वरूपधृक्॥
सर्वं त्वत्तस्ततश्च त्वं नमः सर्वात्मनेऽस्तु ते।
सर्वात्मकोऽसि सर्वेश सर्वभूतस्थितो यतः॥
कथयामि ततः किं ते सर्वं वेत्सि हृदि स्थितम्।
यो मे मनोरथो नाथ सफलः स त्वया कृतः॥
तपश्च तप्तं सफलं यद्दृष्टोऽपि जगत्पते।

भगवानुवाच।

तपसस्तत्फलं प्राप्तं यद्दृष्टोऽहं त्वया ध्रुव।
मद्दर्शनं हि विफलं राजपुत्र न जायते॥
वरं वरय तस्मात् त्वं यथाभिमतमात्मनः।
सर्वं संपद्यते पुंसां मयि दृष्टिपथं गते॥

ध्रुव उवाच।

भगवन् सर्वभूतेश सर्वस्यास्ते भवान् हृदि।
किमज्ञातं तव स्वामिन् मनसा यन्मयेप्सितम्॥
तथापि तुभ्यं देवेश कथयिष्यामि यन्मया।
प्रार्थ्यते दुर्विनीतेन हृदयेनातिदुर्लभम्॥
किं वा सर्वजगत्स्रष्टः प्रसन्ने त्वयि दुर्लभम्।
त्वत्प्रसादफलं भुङ्क्ते त्रैलोक्यं मघवानपि॥

नैतद्राजासनं योग्यमजातस्य ममोदरात् ।
इति गर्वादवोचन्मां सपत्नीमातुरुच्चकैः ॥
आधारभूतं जगतः सर्वेषामुत्तमोत्तमम् ।
प्रार्थयामि प्रभो स्थानं त्वत्प्रसादादतोऽव्ययम् ॥

भगवानुवाच ।

यत्त्वया प्रार्थितं स्थानमेतत् प्राप्स्यति वै भवान् ।
त्वयाऽहं तोषितः पूर्वमन्यजन्मनि बालक ॥
त्वमासीर्ब्राह्मणः पूर्वं मय्येकाग्रमतिस्तदा ।
मातापित्रोश्च शुश्रूषुर्निजधर्मानुपालकः ॥
कालेन गच्छता मित्रं राजपुत्रस्तवाभवत् ।
यौवनेऽखिलभोगाढ्यैर्दर्शनीयोज्ज्वलाकृतिः ॥
तत्सङ्गात्तस्य तामृद्धिमवलोक्यातिदुर्लभाम् ।
भवेयं राजपुत्रोऽहमिति वाञ्छा त्वया कृता ॥
ततो यथाभिलषिता प्राप्ता ते राजपुत्रता ।
उत्तानपादस्य गृहे जातस्य ध्रुव दुर्लभे ॥
अन्येषान्तदरं स्थानं कुले स्वायम्भुवस्य यत् ।
तस्यैतदपरं बाल येनाहं परितोषितः ॥
मामाराध्य नरो मुक्तिमवाप्नोत्यविलम्बिताम् ।
मय्यर्पितमना बाल किमु स्वर्गादिकं पदम् ॥
त्रैलोक्यादखिले स्थाने सर्वताराग्रहाश्रयः ।
भविष्यति न सन्देहो मत्प्रसादाद् ध्रुवो भवान् ॥
सूर्यात् सोमात्तथा भौमात् सोमपुत्राद् बृहस्पतेः ।
सितार्कतनयादीनां सर्वर्क्षाणां तथा ध्रुवः ॥
सप्तर्षीणामशेषाणां ये च वैमानिकाः सुराः ।

एवं तस्य प्रवृत्तस्य नित्यमेवानुपश्यतः।
रागद्वेषौ विवर्द्धेते ह्यनित्यत्वमपश्यतः॥
रागद्वेषाभिभूतं च नरं द्रव्यवशानुगम्।
मोहजाता रतिर्नाम समुपैति नराधिप॥
रत्यर्थं भोगिनस्त्यक्का स वै रतिपरायणः।
लाभं ग्राम्यसुखादन्यं रतितो नानुपश्यति॥
ततो लोभाभिभूतात्मा सङ्गाद्वर्द्धयते जनम्।
पुष्ट्यर्थं चैव तस्येह जनस्यार्थं चिकीर्षति॥
स जानन्नपि वा कार्यमर्थार्थं सेवते नरः।
बालः स्नेहपरीतात्मा तत्र यावन्न तप्यते॥
ततो मानेन संपन्नो रक्षन्नात्मपराजयम्।
करोति येन भोगी स्यामिति तस्माद्विनश्यति॥
तपोबुद्धिप्रयुक्तानां शाश्वतं ब्रह्मवादिनाम्।
अन्विच्छतां शुभं कर्म नराणां त्यज्यतां सुखम्॥
स्नेहायतननाशाच्च धननाशाच्च पार्थिव।
आधिव्याधिप्रतापाच्च निर्वेदमुपगच्छति॥
निर्वेदादात्मसंबोधः संबोधाच्छास्त्रदर्शनम्।
शास्त्रार्थदर्शनाद्राजंस्तप एवानुपश्यति॥
दुर्लभो हि मनुष्येन्द्र नरः प्रत्यवमर्षवान्।
यो वै प्रियसुखे क्षीणस्तपः कर्तुं व्यवस्यति॥
तपः सर्वगतं तात हीनस्यापि विधीयते।
जितेन्द्रियस्य दान्तस्य स्वर्गमार्गप्रदर्शकम्॥
मर्त्यलोके च राजानो ये चान्ये गृहमेधिनः।
महाकुलेषु दृश्यन्ते तत्सर्वं तपसः फलम्॥

नाप्राप्यं तपसः किञ्चित्त्रैलोक्येऽपि परन्तप ।
सुखिनो दुःखिनो वापि नरो लोभं परित्यजेत् ॥
अवेक्ष्य मनसा शास्त्रं बुद्ध्या च नृपसत्तम ।
असन्तोषोऽसुखायेति लोभादिन्द्रियसंभ्रमः ॥
ततोऽस्य नश्यति प्रज्ञा विद्येवाभ्यासवर्जिता ।
नष्टप्रज्ञो यदा तु स्यात्तदा न्यायं न पश्यति ॥
तस्मात्सुखक्षये प्राप्ते पुमानुग्रन्तपश्चरेत् ।
यदिष्टं तत्सुखं प्राहुर्द्वेष्यादुःखमिहोच्यते ॥
सुखे तु वर्त्तमानो वै दुःखे वापि नरोत्तम ।
सुवृत्ताद्यो न चलते शास्त्रचक्षुः स मानवः ॥
क्रियमाणं यदा कर्म नाशं गच्छति मानुषम् ।
तेषां नान्यदृते लोके तपसः कर्म विद्यते ॥
यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम् ।
न कश्चिद्याति पुरुषं दिष्टान्तवशमागतम् ॥
सावशेषसुखं वापि कश्चिन्नैवापकर्षति ।
गृहस्थानां च सर्वेषां विनाशमभिकाङ्क्षताम् ॥
निधनं शोभनं तात पुलिनेषु क्रियावताम् ।
आपन्ने तूत्तरां काष्ठां सूर्ये यो निधनं व्रजेत् ॥
नक्षत्रे च मुहूर्त्ते च पुण्ये राजन् स पुण्यकृत् ।
विषमुद्बन्धनं दाहो दस्युहस्तात्तथा वधः ॥
दंष्ट्रिभ्यश्च पशुभ्यश्च प्राकृतो वध उच्यते ।
न चैभिः पुण्यकर्माणो युज्यन्ते चाभिसन्धिजैः ॥
एवंविधैश्च बहुभिरपरैः प्राकृतैरपि ।
ऊर्द्ध्वं भित्वा प्रतिष्ठन्ते प्राणाः पुण्यवतां नृप ॥

स्वरूपनामात्मकृतं च विस्तरं कुलान्वयं द्रव्यसमृद्धिसंचयम् ।
नरो हि सर्वो लभते यथा कृतं शुभाशुभेनात्मकृतेन कर्मणाम् ॥

भीष्म उवाच ।

इत्युक्तो जनको राजन् यथातथ्यं मनीषिणा ।
श्रुत्वा धर्मविदां श्रेष्ठः परां मुदमवाप ह ॥

इति पराशरजनकसंवादः ।

भीष्म उवाच ।

रागं मोहं तथा स्नेहं कामं क्रोधं च केवलम् ।
योगाच्छित्वादितो दोषान् पञ्चैतान् प्राप्नुवन्ति तान् ॥
यथैवानिमिषाः स्थूला जालं छित्वा पुनर्जलम् ।
प्राप्नुवन्ति तथा योगात्तत्पदं वीतकल्मषाः ॥
तथैव वागुरां छित्वा बलवन्तो यथा मृगाः ।
प्राप्नुयुर्विमलं मार्गं विमुक्ताः सर्वबन्धनैः ॥
लोभजानि तथा राजन् बन्धनानि बलान्विताः ।
छित्वा योगात्परं मार्गं गच्छन्ति विमलं परम् ॥
अबलाश्च मृगा राजन् वागुरासु तथा परे ।
विनश्यन्ति न सन्देहस्तद्वद्योगबलादृते ॥
यथा च शकुनाः सूक्ष्मं प्राप्य जालमरिन्दम ।
तत्र सक्ता विपद्यन्ते मुच्यन्ते न बलान्विताः ॥
अल्पकश्च यथा वह्निः स्वयं शाम्यति दुर्बलः ।
आक्रान्त इन्धनैः स्थूलैस्तद्वद्योगबलः प्रभो ॥
स एव च यथा वह्निर्विभो जातबलः पुनः ।
समीरणगतः क्षिप्रं दहेत्कृत्स्नां महीमपि ॥
तद्वज्जातबलो योगी दीप्ततेजा महाबलः ।

बलानि योगप्राप्तानि मयैतानि विशाम्पते।
निदर्शनार्थं सूक्ष्माणि वक्ष्यामि च पुनस्तव॥
आत्मनश्च समाधाने धारणं प्रति वा विभो।
निदर्शनानि सूक्ष्माणि शृणु मे भरतर्षभ॥
अप्रमत्तो यथा धन्वी लक्ष्यं हन्ति समाहितः।
युक्तः सम्यक् तथा योगी मोक्षं प्राप्नोत्यसंशयम्॥
ईशते नृपते सर्वं योगस्यामिततेजसः॥
आत्मनां च सहस्राणि बहूनि भरतर्षभ।
योगी कुर्याद्बलं प्राप्य तैश्च सर्वैश्चरेन्महीम्॥
प्राप्नुयाद्विषयान् कश्चित्पुनश्चोग्रं तपश्चरेत्।
संक्षिपेच्च पुनस्तात सूर्यस्तेजो गुणानिव॥
बलस्थस्य हि योगस्य बन्धनेशस्य पार्थिव।
विमोक्षे प्रभविष्णुत्वमुपपन्नमसंशयम्॥
अन्तकाल इवादित्यः कृत्स्नं संशोधयेज्जगत्॥
दुर्बलश्च यथा राजन् स्रोतसा ह्रियते नरः।
बलहीनस्तथा योगी विषयैर्ह्रियतेऽवशः॥
तदेव च यथा स्रोतो विष्टम्भयति वारणः।
तद्वद्योगबलं लब्ध्वा गृह्णते विषयान् बहून्॥
न यमो नान्तकः क्रुद्धो न मृत्युर्भीमविक्रमः।
यथा च नावं कौन्तेय कर्णधारः समाहितः।
महार्णवगतां शीघ्रं नयेत्पार्थिवसत्तम॥
तद्वदात्मसमाधानं युक्त्वा योगेन तत्त्ववित्॥
दुर्गमं स्थानमाप्नोति हित्वा देहमिमं नृप॥
सारथिश्च यथा युक्त्वा सदश्वान्सुसमाहितः।

देशमिष्टं नयत्याशु धन्विनं पुरुषर्षभ ॥
तथैव नृपते योगी महाव्रतसमाश्रितः ।
प्राप्नोत्याशु परं स्थानं लक्ष्यं मुक्त इवाशुगः ॥
आवेश्यात्मनि चात्मानं योगी तिष्ठति योऽचलः ।
पापं हन्ति पुनीतानां पदमाप्नोति सोऽजरम् ॥
कणानां भक्षणे युक्तः पिण्याकस्य च भारत ।
स्नेहानां वर्जने युक्तो योगी बलमवाप्नुयात् ॥
भुञ्जानो यावकं रूक्षं दीर्घकालमरिन्दम ।
एकाहारी विशुद्धात्मा योगी बलमवाप्नुयात् ॥
पक्षान् मासानृतूंश्चैवानक्तः संवत्सरांस्तथा ।
अपः पीत्वा पयोमिश्रा योगी बलमवाप्नुयात् ॥
अखण्डमपि वा मासं सततं मनुजेश्वर ।
उपोष्य सम्यक् शुद्धात्मा योगी बलमवाप्नुयात् ॥
कामं जित्वा तथा क्रोधं शीतोष्णे वर्षमेव च ।
भयं शोकं यथा श्वासं पौरुषान् विषयांस्तथा ॥
अरतिं दुर्जयं चैव घोरं तृष्णां च पार्थिव ।
स्पर्शं निद्रां तथा तन्द्रां दुर्जयां नृपसत्तम ॥
दीपयन्ति महात्मानः सूक्ष्ममात्मानमात्मना ।
वीतरागा महाप्राज्ञा ध्यानाध्ययनसंपदा ॥
दुर्गस्त्वेषमतः पन्था ब्राह्मणानां विपश्चिताम् ।
यः कश्चिद्व्रजति ह्यस्मिन् क्षेमेण भरतर्षभ ॥
यथा कश्चिद्वनं घोरं वनसर्पसरीसृपम् ।
श्वभ्रवत्तोयहीनं च दुर्गमं बहुकण्टकम् ॥
अभक्तमटवीप्रायं दावदग्धमहीरुहम् ।

पन्थानं तस्कराकीर्णं क्षेमेणाभिपतेद्युवा ॥
योगमार्गं तथासाद्य यः कश्चिद् व्रजति द्विजः ।
क्षेमेणोपरमेन्मार्गाद्वहुदोषो हि स स्मृतः ॥
सुस्थेयं क्षुरधारासु निशितासु महीपते ।
धारणासु तु योगस्य दुःस्थेयमकृतात्मभिः ॥
विपन्ना धारणास्तात नयन्ति न शुभां गतिम् ।
नेतृहीना यथा नावः पुरुषानर्णवे नृप ॥
यस्तु तिष्ठति कौन्तेय धारणासु यथाविधि ।
मरणं जन्मदुःखञ्च सुखञ्च स विमुञ्चति ॥
नानाशास्त्रेषु निष्पन्नं योगेष्विदमुदाहृतम् ।
परं योगस्य यत्कृत्यं निश्चितं तद्विजातिषु ॥
किं तेषां जीवितेनेह पशुवच्चेष्टितेनेह किम् ।
येषां न प्रवणं चित्तं वासुदेवे जगन्मये ॥
ध्यानं तस्य प्रवक्ष्यामि यन्न दृष्टं हि केनचित् ।
श्रूयतां भूयकैवल्यं केवलं मलवर्जितम् ॥
यदा दीपो निवातस्थो निश्चलो वायुवर्जितः ।
प्रज्वलन्नाशयत्सर्वमन्धकारं महामते ॥
तद्वद्दोषविहीनात्मा भवत्येव न संशयः ।
निराशो निश्चलो वीर न मित्रं न रिपुः कदा ॥
शोको हर्षश्च विस्मादो न लोभो मत्सरो भ्रमः ।
संभ्रमात्तापमोहैश्च सुखदुःखैर्विमुच्यते ॥
विषयैश्चापि सर्वैश्च इन्द्रियाणां प्रमुच्यते ।
तदा स केवलो ज्ञानकैवल्यत्वं प्रजायते ॥
ज्वालाकर्मप्रसङ्गेन दीपस्तैलं प्रशोषयेत् ।

वत्यांधारेण राजेन्द्र निर्द्वन्द्वो वायुवर्जितः ॥
कज्जलं वमते पश्चात्तैलस्यापि महामते ।
कृष्णा संदृश्यते रेखा दीपस्याग्रे महामते ॥
स्वयमाकर्षते तैलं येनासौ निर्मलो भवेत् ।
कायावतस्थितस्तद्वत्कर्म तैलं प्रशोषयेत् ॥
विषयान् कज्जलं कृत्वा प्रत्यक्षात्संप्रदर्शयेत् ।
ज्वालायां निर्मलो भूत्वा स्वयमेव प्रकाशते ॥
क्रोधलोभादिभिः संस्रैर्वायुभिः परिवर्ज्जितः ।
निःस्पृहो निश्चलो भूत्वा तेजश्च स्वयमुज्वलेत् ॥
त्रैलोक्यं पश्यति स्वच्छं स्वस्थानस्थः स्वतेजसा ।
केवलज्ञानरूपोऽयं मया ते परिकीर्त्तितः ॥
इत्थं ते संप्रवक्ष्यामि यदेतदनुपृच्छसि ।
योगकृत्यं महाराज पृथगेव शृणुष्व मे ॥
योगकृत्यं तु योगानां ध्यानमेव परं बलम् ।
तच्चापि द्विविधं ध्यानमाहुर्विद्याविदो जनाः ॥
एकाग्रता च मनसः प्राणायामस्तथैव च ।
प्राणायामस्तु सगुणो निर्गुणो मानसस्तथा ॥
मूत्रोत्सर्गपुरीषे च भोजने च नराधिप ।
निष्कलं नाभियुञ्जीत शेषं युञ्जीत तत्परं ॥
विमुक्तः सर्वसङ्गेभ्यो लघ्वाहारो जितेन्द्रियः ।
पूर्वरात्रेऽपरात्रे वा धारयीत मनो त्मनि ॥
स्थिरीकृत्येन्द्रियग्रामं मनसा हि नरेश्वर ।
मनो बुद्ध्या स्थिरं कृत्वा पाषाण इव निश्चलः ॥
स्थाणुवच्चाप्यकम्प्यः स्यादद्रिरिवचापि निश्चलः ।

बुधा विधिविधानज्ञास्तदा मुक्तं प्रचक्षते।
न शृणोति न चाघ्राति न रस्यति न पश्यति॥
न च स्पर्शं विजानाति न सङ्कल्पयते मनः।
न चाभिमन्यते किञ्चिन्न च बुध्यति काष्टवत्॥
तदा प्रकृतिमापन्नं युक्तमाहुर्मनीषिणः।
महतस्तु परस्तात पारे तिष्ठन्न तामसः॥
स तमोनुद इत्युक्तः सर्वज्ञैर्वेदपारगैः।
विमलो वितमस्कश्च निर्लिङ्गो लिङ्गसंज्ञितः॥
योग एष हि योगानां किमन्यद्योगलक्षणम्।
एवं पश्यन्प्रपश्यन्ति आत्मानमजरं परम्॥
योगदर्शनमेतावद्ध्यानञ्च भरतर्षभ।
सर्वशास्त्रमतेनैतदुक्तं ते तत्वतो मया॥

इति योगध्यानविधिः।

भीष्म उवाच।

पञ्च दोषान् प्रभो देहे प्रवदन्ति मनीषिणः।
मार्गगाः कापिलाः सांख्याः शृणु तानरिसूदन॥
कामक्रोधौ भयं निद्रा पञ्चमः श्वास उच्यते।
एते दोषाः शरीरेषु पश्यन्ते सर्वदेहिनाम्॥
छिन्दन्ति क्षमया क्रोधं कामं संकल्पवर्जनात्।
सत्वसंसेवनान्निद्रामप्रमादाद्भयं तथा॥
छिन्दन्ति पवनं श्वासमल्पाहारतया नृप।
यथा पुष्पफलैर्न्नित्यमृतवो मूर्त्तयस्तथा॥
एवमप्यनुमानेन ह्यलिङ्गमुपलभ्यते।
यं च विंशतिमस्तात लिङ्गेषु नियतात्मकः॥

अनादिनिधनोऽनन्तः सर्वदर्शी निरामयः ।
केवलं त्वभिमानित्वाद् गुणेषु गुण उच्यते ॥
गुणा गुणवतः सन्ति निर्गुणस्य कुतो गुणाः ।
तस्मादेवं विजानन्ति ये जना गुणदर्शिनः ॥
यदा त्वेष गुणानेतान् प्राकृतानभिमन्यते ।
तदा स गुणहीनं तु परमेवानुपश्यति ॥
अव्यक्ताच्च महानात्मा समुत्पद्यति पार्थिव ।
प्रथमं सर्गमित्येतदाहुः प्राधानिकं बुधाः ॥
महतश्चाप्यहङ्कार उत्पद्यति नराधिप ।
द्वितीयं सर्गमित्याहुरेतद्बुध्यात्मकं नृप ॥
अहङ्काराच्च संभूतं मनोभूतं गुणात्मकम् ।
तृतीयः सर्ग इत्येष आहङ्कारिक उच्यते ॥
मनसस्तु समुद्भूता महाभूता नराधिप ।
चतुर्थं सर्गमित्येतन्मानसं विद्धि मे मतः ॥
शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च ।
पञ्चमं सर्गमित्याहुर्भौतिकं भूतचिन्तकाः ॥
श्रोत्रं त्वक् चैव चक्षुश्च जिह्वा घ्राणञ्च पञ्चमम् ।
सर्गं तु षष्ठमित्याहुर्बहुचिन्तात्मकं स्मृतम् ॥
अधः श्रोत्रेन्द्रियग्राम उत्पद्यति नराधिप ।
सप्तमं सर्गमित्याहुरेतदैन्द्रियकं स्मृतम् ॥
ऊर्द्ध्वं स्रोतस्तथा तिर्यगुत्पद्यति नराधिप ।
अष्टमं सर्गमित्याहुरेतदार्जवकं स्मृतम् ॥
तिर्यक् स्रोतस्त्वधः स्रोत उत्पद्यति नराधिप ।
नवमं सर्गमित्याहुरेतदार्जवकं बुधाः ॥

एतानि नव सर्गाणि तत्त्वानि च नराधिप ।
चतुर्विंशतिरुक्तानि यथाश्रुतिनिदर्शनात् ॥
बुद्धीन्द्रियाणि पञ्चैव पञ्च कर्मेन्द्रियाणि च ।
मनः पञ्चेन्द्रियार्थांश्च विकाराः षोडश स्मृताः ॥
अव्यक्तञ्च महच्चैव तथाहङ्कार एव च ।
एताः प्रकृतयस्त्वष्टौ महाभूतानि पञ्च च ॥
मनश्चरति राजेन्द्र चारितं सर्वमिन्द्रियैः ।
न चेन्द्रियाणि पश्यन्ति मन एवात्र पश्यति ॥
मनस्युपरते राजन्निन्द्रियोपरमो भवेत् ।
एवं मनःप्रधानानि इन्द्रियाणि प्रभावयेत् ॥
इन्द्रियाणान्तु सर्वेषामीश्वरं मन उच्यते ।
एतद्विशन्ति भूतानि सर्वाणीह महायशः ॥
अध्यात्ममधिभूतं च अधिदैवं च श्रूयताम् ।
पादावध्यात्ममित्याहुर्ब्राह्मणास्तत्त्वदर्शिनः ॥
गन्तव्यमधिभूतं च विष्णुस्तत्राधिदैवतम् ।
पायुरध्यात्ममित्याहुर्यथातत्त्वार्थदर्शिनः ॥
विसर्गमधिभूतन्तु मित्रस्तत्राधिदैवतम् ।
उपस्थोऽध्यात्ममित्याहुर्यथायोगप्रदर्शिनः ॥
अधिभूतं तथाऽनन्दो दैवत च प्रजापतिः ।
हस्तावध्यात्ममित्याहुर्यथासांख्यानिदर्शिनः ॥
कर्त्तव्यमधिभूतं तु इन्द्रस्तत्राधिदैवतम् ।
वागध्यात्ममिति प्राहुर्यथाश्रुतिनिदर्शिनः ॥
वक्तव्यमधिभूतं तु वह्निस्तत्राधिदैवतम् ।
चक्षुरध्यात्ममित्याहुर्यथाश्रुतिनिदर्शिनः ॥

रूपमात्राधिभूतं तु सूर्यस्तत्राधिदैवतम्।
श्रोत्रमध्यात्ममित्याहुर्यथाश्रुतिनिदर्शनाः॥
शब्दास्तत्राधिभूतं तु दिशस्तत्राधिदैवतम्।
जिह्वेत्यध्यात्ममित्याहुर्यथातत्त्वनिदर्शनाः॥
रस एवाधिभूतं तु आहुस्तत्राधिदैवतम्।
घ्राणमध्यात्ममित्याहुर्यथाश्रुतिनिदर्शनाः॥
गन्ध एवाधिभूतं तु पृथिवी त्वधिदैवतम्।
त्वगध्यात्ममिति प्राहुस्तत्त्वबुद्धिविशारदाः॥
स्पर्शमेवाधिभूतं तु पवनश्चाधिदैवतम्।
मनोऽध्यात्ममिति प्राहुर्यथाशास्त्रविशारदाः॥
मन्तव्यमधिभूत तु चन्द्रमाश्चाधिदैवतम्।
अहङ्कारिकमध्यात्ममाहुस्तत्त्वनिदर्शिनः॥
बोद्धव्यमधिभूतं तु चेतज्ञोऽत्राधिदैवतम्।
एषा ते व्यक्तितो राजन्विभूतिरनुदर्शिता॥
आदौ मध्ये तथाचान्ते यथा तत्त्वेन तत्त्ववित्॥
प्रकृतिर्गुणान्विकुरुते स्वच्छन्देनात्मकाम्यया।
क्रीडार्थं तु महाराज शतशोऽथ सहस्रशः॥
यथा दीपसहस्राणि दीपान्मर्त्त्याः प्रकुर्वते॥
प्रकृतिस्तथा विकुरुते पुरुषस्य गुणान् बहून्।
सत्त्वमानन्दरुद्रेकः प्रीतिः प्राकाश्यमेव च॥
सुखं बुद्धिस्तथारोग्यं सन्तोषः श्रद्दधानता।
अकार्पण्यमसरम्भः क्षमा धृतिरहिंसता॥
समता सत्यमानृण्यमार्द्दवं ह्रीरचापलम्।
शौचमार्जवमाचारमलौल्यं हृद्यसंभ्रमः॥

इष्टानिष्टवियोगानां कृतानामविकत्थनम्।
दानेन चानुग्रहणमस्पृहत्वं परार्थतः॥
सर्वभूतदया चैव सत्त्वस्यैते गुणाः स्मृताः।
रजोगुणानां संघातो रूपमैश्वर्यविग्रहः॥
अत्यासित्वमकारुण्यं सुखदुःखोपसेवनम्।
परापवादेषु रतिर्विवादानां च सेवनम्॥
परितापोऽभिहरणं ह्रीनाशोऽनार्जवं तथा।
भेदः परुषता चैव कामः क्रोधो मदस्तथा॥
दर्पो द्वेषोऽभिवादश्च एते प्रोक्ता रजोगुणाः।
तामसानां तु संघातं प्रवक्ष्याम्युपधार्यताम्॥
मोहो प्रकाशस्तामिस्रमन्धतामिस्रसंज्ञितम्।
मरणं चान्धतामिस्रतामिस्रं क्रोध उच्यते॥
तमसो लक्षणानीह भक्षाणामतिरोचनम्।
भोजनानामपर्याप्तिस्तथा पापेष्वतृप्तता॥
गन्धवासोविहारेषु शयनेष्वासनेषु च।
दिवास्वप्नेऽतिवादे च प्रमादेषु च वै रतिः॥
नृत्यवादित्रगीतानामज्ञानाच्छ्रद्धानता।
द्विषो धर्मविशेषाणामेते वै तामसा गुणाः॥
एते प्रधानस्य गुणास्त्रयः पुरुषसत्तम।
कृत्स्नस्य चैव जगतस्तिष्ठन्त्यनयगाः सदा।
अव्यक्तरूपो भगवान् शतधा च सहस्रधा॥
कोटिशश्च करोत्येव प्रत्यगात्मानमात्मना।
सात्त्विकस्योत्तमं स्थानं राजसस्येह मध्यमम्॥
तामसस्याधमं स्थानं प्राहुरध्यात्मचिन्तकाः।

केवलेनेह पुख्येन गतिमूर्द्धामवाप्नुयात् ॥
पुख्यपापेन मानुष्यमधर्मेणाप्यधोगतिम् ।
द्वन्द्वमेषां त्रयाणान्तु सन्निपातं च तत्वत: ॥
सत्वस्य रजसश्चैव तमसश्च शृणुष्व मे ।
सत्वस्य तु रजोदृष्टं रजसातमसस्तथा ॥
तमसश्च तथा सत्वं सत्वस्याव्यक्त एव च ।
अव्यक्तः सत्वसंयुक्तो देवलोकमवाप्नुयात् ॥
रजः सत्वसमायुक्तो मानुष्येषु प्रपद्यते ।
रजस्तमोभ्यां संयुक्तस्तिर्य्यग्योनिषु जायते ॥
राजसैः तामसैः सत्वैर्युक्तो मानुष एव तत् ।
पुख्यपापविमुक्तानां स्थानमाहुर्महात्मनाम् ॥
शाश्वतं चाव्ययं चैव अक्षयं चामृतं च यत् ।
ज्ञानिनां संभवं श्रेष्ठं स्थानमव्रणमच्युतम् ॥
अतीन्द्रियमबीजञ्च जन्ममृत्युतमोनुदम् ।
अव्ययस्थं परं ब्रह्म पृष्टस्तेहं नराधिप ॥
स एष प्रकृतिस्थो हि तस्थ इत्यभिधीयते ।
अचेतना चैव मता प्रकृतिश्चापि पार्थिव ॥
एतेनाधिष्ठिता चैव सृजते संहरत्यपि ।
न शक्यो निर्गुणस्तात गुणीकर्त्तुं विशाम्पते ॥
गुणवांश्चाप्यगुणवान् यथातत्वं निबोध मे ।
गुणैर्हि गुणवानेव निर्गुणश्चागुणैस्तथा ॥
प्राहुरेव महात्मानो मुनयस्तत्वदर्शिनः ।
गुणस्वभावस्त्वव्यक्तो गुणानेवातिवर्त्तते ॥
उपयुंक्ते च तानेव स वै राजन् स्वभावतः ।

न मुक्तः परमोऽस्तीति नित्यमेवानुमन्यते ॥
अनेन कारणेनैतदव्यक्तः स्यादचेतनः ।
नित्यत्वाच्चाचरत्वाच्च चरत्वान्न तदन्यथा ॥
यदज्ञानेन कुर्वीत गुणसर्गं पुनः पुनः ।
यदात्मानं न जानीते तदाव्यक्तेन मुच्यते ॥
कर्त्तृत्वाच्चैव तत्वानां तत्वधर्मा तथोच्यते ।
कर्त्तृत्वाच्चैव सर्गाणां सर्गधर्मा तथोच्यते ॥
जीवत्वात्प्रलयत्वाच्च प्रकृतत्वात्तथैव च ।
उपेक्षकत्वादन्यत्वादभिमानाच्च केवलम् ॥
मन्यन्ते यतयः सिद्धा अध्यात्मज्ञा गतज्वराः ।
अव्यक्तैकत्वमित्याहुर्नानात्वं पुरुषस्तथा ॥
सर्वभूतदयावन्तः केवलज्ञानमास्थिताः ।
अन्यः स पुरुषो व्यक्तस्त्वध्रुवो ध्रुवसंज्ञकः ॥
यथा मुञ्ज इषीकाणां तथैवैतद्विजायते ।
अन्यच्च मशकं विन्द्यादन्यच्चोदुम्बरं तथा ॥
न चोदुम्बरसंयोगो मशकस्तत्र लिप्यते ।
अन्य एव तथा मत्स्यतदन्यमुदकं स्मृतम् ।
न चोदकस्य स्पर्शेन मत्स्यो लिप्यति सर्वशः ॥
अन्योऽप्यग्निरुषाप्यन्या नित्यमेव भवेद्विभो ।
न चोपलिप्यते सोऽग्निरुषा संस्पर्शनेन वा ॥
पुष्करं त्वन्यदेवात्र तथान्यदुदकं स्मृतम् ।
न चोदकस्पर्शेन लिप्यते तत्र पुष्करम् ॥
एतेषां सहवासं च निवासं चैव नित्यशः ।
याथातथ्येन पश्यन्ति नानित्यं प्राकृता जनाः

ये त्वन्यथैवं पश्यन्ति न सम्यक् तेषु दर्शनम् ॥
ते व्यक्तं निरयं घोरं प्रविशन्ति पुनः पुनः ।
सांख्यदर्शनमेतत्ते परिसंख्यातमुत्तमम् ॥
एवं हि परिसंख्याय सांख्याः केवलतां गताः ।
येऽप्यन्ये तत्वकुशलास्तेषामेतन्निदर्शनम् ॥
इति श्रीभक्तिसागरे परमार्थनिरूपणे
पराशरजनकसंवादे योगध्यानविधि-
प्रकृतिपुरुषनिरूपणन्नाम नवमस्तरङ्गः ।

भीष्म उवाच ।

अत्र ते वर्त्तयिष्यामि इतिहासं पुरातनम् ।
वशिष्टस्य संवादं करालजनकस्य च ॥
वशिष्टं श्रेष्टमासीनमृषीणां भास्करद्युतिम् ।
पप्रच्छ जनको राजा ज्ञानं नैश्रेयसं परम् ॥
मैत्रावरुणिमासीनमभिवाद्य कृताञ्जलिः ।
पप्रच्छर्षिवरं राजा करालजनकः पुरा ॥
भगवन् श्रोतुमिच्छामि परं ब्रह्म सनातनम् ।
यस्मान्नपुनरावृत्तिमाप्नुवन्ति मनीषिणः ॥
अक्षराक्षरयोरेष द्वयोः संबन्ध इष्यते ।
स्त्रपुंसोर्वापि भगवन् सम्बन्धस्तद्वदुच्यते ॥
ऋते तु पुरुषं नेह स्त्रीगर्भं धारयत्युत ।
ऋते स्त्रियं न पुरुषो रूपं निर्वर्त्तयेत्तदा ॥
अन्योन्यस्याभिसंबन्धादन्योन्यगुणसंश्रयात् ।
रूपं निर्वर्त्तयत्येतं देवं सर्वासु योनिषु ॥
एवमेतद्विजश्रेष्ठ वेदे शास्त्रेषु पठ्यते ।

वेदशास्त्रद्वयं चैव प्रमाणन्तत्सनातनम् ॥
अन्योन्यगुणसंरोधादन्योन्यगुणसंश्रयात्।
एवमेवाभिसम्बद्धौ नित्यं प्रकृतिपूरुषौ ॥
पश्यामि भगवंस्तस्मान्मोक्षधर्मो न विद्यते।
अथवानन्तरकृतं किंचिदेव निदर्शनम् ॥
तन्ममाचक्ष्व तत्वेन प्रत्यक्षो ह्यसि सर्वदा।
मोक्षकामा वयं चापि काङ्क्षामो यदनामयम् ॥
अदेहमजरं नित्यमतन्द्रितमनीश्वरम्।

वशिष्ठ उवाच।

यदेतदुक्तं भवता वेदशास्त्रनिदर्शनम्।
एवमेतद्यथा चैतन्निगृह्णाति तथा भवान् ॥
धार्यते हि त्वया ग्रन्थउभयोर्वेदशास्त्रयोः।
न च ग्रन्थस्य तत्वज्ञो यथावत्वं नरेश्वर ॥
यो हि वेदेषु शास्त्रेषु ग्रन्थधारणतत्परः।
न च ग्रन्थार्थतत्त्वज्ञस्तस्य तद्धारणं वृथा ॥
भारं स वहते तस्य ग्रन्थस्यार्थं न वेत्ति यः।
यस्तु ग्रन्थार्थतत्त्वज्ञो नास्य ग्रन्थागमो वृथा ॥
ग्रन्थस्यार्थं च पृष्टः सन् तादृशो वक्तुमर्हति।
यथातत्वाभिगमनादर्थं तस्य स विन्दति ॥
न यः संसत्सु कथयेद्ग्रन्थार्थं स्थूलबुद्धिमान्।
स कथं मन्दविज्ञानो ग्रन्थं वक्ष्यति निर्णयात् ॥
निर्णयन् वापि छिद्रात्मा न तं वक्ष्यति तत्वतः।
सोऽपहासार्थतामेति यः स्याच्चैवात्मवानपि ॥
तस्मात्त्वं शृणु राजेन्द्र यथैतदनुदृश्यते।

याथातथ्येन सांख्येषु योगेषु च महात्मसु ॥
यदेव योगाः पश्यन्ति सांख्यैस्तदनुगम्यते ।
एकं सांख्यञ्च योगञ्च यः पश्यति स बुद्धिमान् ॥
एतदैन्द्रियकं तात यद्भवानिदमाह माम् ।
द्रव्याद्द्रव्यस्य निर्वृत्तिरिन्द्रियादिन्द्रियं तथा ।
देहाद्देहमवाप्नोति बीजाद्बीजं तथैव च ।
निरिन्द्रियस्य बीजस्य निर्द्रव्यस्याप्यदेहिनः ॥
कथं गुणा भविष्यन्ति निर्गुणत्वान्महात्मनः ।
गुणा गुणेषु जायन्ते तत्रैव निविशन्ति च ॥
एवं गुणाः प्रकृतितो जायन्ते न भवन्ति च ।
यस्माद्यदभिजायेत तत्रैव च प्रलीयते ॥
लीयन्ते प्रतिलोमानि सृज्यन्ते चोत्तरोत्तरम् ।
गुणा गुणेषु सततं सागरस्योर्मयो यथा ॥
सर्गप्रलय एतावान् प्रकृतेर्नृपसत्तम ।
एकत्वं प्रलये चास्य बहुत्वं च यथासृजत् ॥
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
न हि प्रतीक्षते मृत्युः कृतं चास्य न वा कृतम् ॥
अनुगम्य विना शान्तिं निवर्त्तन्तीह बान्धवाः ।
अग्नौ प्रक्षिप्य पुरुषं ज्ञातयः सुहृदस्तथा ॥
नास्तिका निरनुक्रोशान्नरान्पापमते स्थितान् ।
वामतः कुरु विस्रब्धं परं प्रेप्सुरतन्द्रितः ॥
एवमभ्याहते लोके कालेनोपनिपीडिते ।
सुमहद्धैर्यमालम्ब्य धर्मं सर्वात्मना कुरु ॥
सोपानभूतं स्वर्गस्य मानुष्यं प्राप्य दुर्लभम् ।

यथात्मानं समादध्यान्न भ्रश्यत पुनर्यथा ॥
इह लोके हि धनिनां स्वजनः स्वजनायते ।
स्वजनस्तु दरिद्राणां जीवतामपि नश्यति ॥

धनेन किं यो न ददाति नाश्नुते बलेन किं येन रिपुं न बाधते ।
श्रुतेन किं येन न धर्ममाचरेत् किमात्मना यो न जितेन्द्रियो वशी ॥

आत्मना चार्थयुक्तेन पापे निवश्यते मनः ।
स कर्म कलुषं कृत्वा क्लेशे महति धीयते ॥
दुर्भिक्षादेव दुर्भिक्षं क्लेशात् क्लेशं भयाद्भयम् ।
मृतेभ्यः प्रमृता यान्ति दरिद्राः पापकर्मिणः ॥
उत्सवादुत्सवं यान्ति स्वर्गात्स्वर्गं सुखात्सुखम् ।
येन येन यथा यद्यत्पुरा कर्मसु निश्चितम् ॥
तत्तदेवोत्तरं भुङ्क्ते नित्यं विहितमात्मनः ।
अनोद्यमानानि यथा पुष्पाणि च फलानि च ॥
स्वकालेनाभिवर्तन्ते तथा कर्म पुराकृतम् ।
संमानश्चावमानश्च लाभोऽलाभः चयाचयौ ॥
प्रवृत्तानतिवर्त्तन्ते निधनान्ताः पदे पदे ।
आत्मना विहितं दुःखमात्मना विहितं सुखम् ॥
गर्भशय्यामुपादाय भजते पूर्वदैहिकम् ।
बालो युवा च वृद्धश्च यत्करोति शुभाशुभम् ।
तस्यां तस्यामवस्थायां भुङ्क्ते जन्मनि जन्मनि ॥
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम ।
तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ॥
मलिनं हि यथा वस्त्रं पश्चाच्छुध्यति कर्मणा ।
उपवासैः प्रतप्तानां दीर्घं सुखमनन्तकम् ॥

दीर्घकालेन तपसा सेवितेन महामते।
धर्माग्निदग्धपापानां संसिध्यन्ति मनोरथाः॥
शकुनानामिवाकाशे मत्स्यानामिव चोदके॥
पदं यथा न दृश्येत तथा पुण्यकृतां गतिः।
अलमन्यैरुपालम्भैः कीर्तितैश्च व्यतिक्रमैः॥
पेशलं चानुरूपं च कर्त्तव्यं हितमात्मनः।

भीष्म उवाच।

न हायनैर्न पलितैर्न वित्तैर्न च बन्धुभिः।
ऋषयश्चक्रिरे धर्मं योनूचानः स नो महान्॥
तपोमूलमिदं सर्वं यन्मां पृच्छसि पाण्डव।
तदिन्द्रियाणि संयम्य तपो भवति नान्यथा॥
इन्द्रियाणां प्रसङ्गेन दोषमर्च्छत्यसंशयम्।
सन्नियम्य तु तान्येव सिद्धिं प्राप्नोति मानवः॥
अश्वमेधसहस्रस्य वाजपेयशतस्य च।
योगस्य कलया तात न तुल्यं विद्यते फलम्॥
न विना ज्ञानविज्ञानं मोक्षस्याधिगमो भवेत्।
न विना गुरुसम्बन्धं ज्ञानस्याधिगमः स्मृतः॥
गुरुः प्लावयिता तस्य ज्ञानं प्लवमिहोच्यते।
चिराय क्लत्यस्तु कृतार्थस्तदुतोभयं त्यजेत्॥
पूर्वैराचरितो धर्मस्त्वनुराग्रस्यसंपदा।
अनेन क्रमयोगेन बहुजातिषु कर्मणाम्॥
हित्वा शुभाशुभं कर्म मोक्षो नामेह लभ्यते।
भावितैः कारणैश्चायं बहुसंसारयोनिषु॥
आसादयति शुद्धात्मा मोक्षं वै प्रथमे श्रमे।

तमासा ... तु मुक्तस्य दृष्टार्थस्य विपश्चितः ॥
त्रि... श्रमेषु कोन्वर्थो भवेत्परमभीप्सवः ।
...तिरात्मनि नान्यत्र सर्वजन्तुषु तत्समम् ॥
स्वयं च शक्यते द्रष्टुं सुसमाहितचेतसा ।
न बिभेति परो यस्मान्न बिभेति पराच्च यः ॥
यश्चानिच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ।
यदा भावं न कुरुते सर्वभूतेषु पापकम् ॥
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ।
संयोज्य तपसात्मानमीर्ष्यामुत्सृज्य मोहिनीम् ॥
त्यक्त्वा कामञ्च मोहञ्च ततो ब्रह्म समाप्नुते ।
यदा श्रव्ये च दृश्ये च सर्वभूतेषु चाव्ययम् ॥
समो भवति निर्द्वन्द्वो ब्रह्म संपद्यते तदा ।
यदा स्तुतिं च निन्दां च समत्वेनैव पश्यति ॥
काञ्चनं चायसं चैव सुखदुःखे तथैव च ।
शीतमुष्णं तथैवार्थमनर्थं प्रियमप्रियम् ॥
जीविते मरणं चैव ब्रह्म संपद्यते तदा ।
प्रसार्येह यथाङ्गानि कूर्मः संहरते पुनः ॥
तथेन्द्रियाणि मनसा संयन्तव्यानि भिक्षुणा ।
तमः परिगतं वेश्म यथा दीप्तेन दृश्यते ॥
तथा बुद्धिप्रदीपेन शक्य आत्मा निरीक्षितुम् ।
एतत्सर्वं च पश्यामि त्वयि बुद्धिमतां वर ॥

भीष्म उवाच ॥

एतावदुक्त्वा वचनं करालजनकं प्रभुः ।
वशिष्ठोऽपि तपः कर्तुं जगाम स्वाश्रमं ततः ॥

इति करालजनकवशिष्ठसंवादः ।

भीष्म उवाच ।

संलब्ध्वा परमं देवाद्वर सत्यवतीसुतः ।
अरणीसहिते गृह्य ममन्थाग्निचिकीर्षया ॥
अथ रूपं परं राजन् बिभ्रतीं स्वेन तेजसा ।
घृताचीं नाम सरसमपश्यद्भगवान् हरिः ॥
अभवद्भगवान् व्यासः सहसा काममोहितः ।
शुकी भूत्वा महाराज घृताची समुपागमत् ॥
यत्नान्नियच्छतस्तस्य मुनेरग्निचिकीर्षया ।
अरण्यामेव सहसा तस्य शुक्रमवापतत् ॥
सोऽविशङ्केन तपसा तथैव द्विजसत्तमः ।
अरणीं ममन्थ ब्रह्मर्षिस्तस्यां जज्ञे शुको नृपः ।
शुक्रे निर्मथ्यमाने स शुको जज्ञे महायशाः ।
परमर्षिर्महायोगी अरणीगर्भसंभवः ॥
एकदा नारदः श्रीमान् व्यासाश्रमसुपागमत् ।
शुकं स्वाध्यायनिरतं वेदार्थान् वक्तुमीप्सया ॥
देवर्षिन्तु शुको दृष्ट्वा नारदं समुपस्थितम् ।
अर्घपूर्वेण विधिना वेदोक्तेनाभ्यपूजयत् ॥
नारदोऽथाब्रवीत्प्रीतो ब्रूहि धर्मभृतां वर ।
केन त्वां श्रेयसा वत्स योजयामीति हृष्टवत् ॥
नारदस्य वचः श्रुत्वा शुकः प्रोवाच भारत ।
अस्मिंल्लोके हितं यत्स्यात्तेन मां योक्तुमर्हसि ॥

नारद उवाच ।

तत्त्वं जिज्ञासमानानामृषीणां भावितात्मनाम् ।
सनत्कुमारो भगवानिदं वचनमब्रवीत् ॥

नास्ति विद्यासमं चक्षुर्नास्ति सत्यपरं तपः ।
नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम् ॥
निवृत्तिः कर्मणः पापात्सततं पुण्यशीलता ।
सद्वृत्तिः समुदाचार श्रेय एतदनुत्तमम् ॥
नापरीक्षितचारित्रे विद्या देया कथंचन ।
यथा हि कनकं शुद्धं तापच्छेदनिकर्षणैः ॥
परीक्षेत तथा शिष्यानीक्षेत्कुलगुणादिभिः ।
अशोकं शोकनाशार्थं शास्त्रं शान्तिकरं शिवम् ॥
निशम्य लभते बुद्धिं तां बुद्धा सुखमेधते ।
अलम्परिग्रहेणेह दोषवान्हि परिग्रहः ॥
कृमिर्हि कोषकारस्तु बध्यते स्वपरिग्रहात् ।
पुत्रदारकुटुम्बेषु सक्ता सीदन्ति जन्तवः ॥
सरः पङ्कार्णवे मग्ना जीर्णा वनगजा इव ।
महाजालसमाकृष्टान् स्थले मत्स्यानिवोद्धृतान् ॥
स्नेहजालसमाकृष्टान् पश्य जन्तून् सुदुःखितान् ।
निमेषमात्रमपि च वयो गच्छन्न तिष्ठति ॥
स्वशरीरेष्वनित्येषु नित्यं किमनुचिन्तयेत् ।
यदि न स्यात्पराधीनं पुरुषस्य क्रियाफलम् ॥
संयताश्च हि दक्षाश्च मतिमन्तश्च मानवाः ।
दृश्यन्ते निःफलाः सन्तः प्रहीणः सर्वकर्मभिः ॥
वहन्ति शिविकामन्ये यान्त्यन्ये शिबिकागताः ।
मनुष्याश्च शतस्त्रीकाः शतशो विधवाः स्त्रियः ॥
द्वन्द्वारामेषु भूतेषु गच्छन्त्येकैकशो नराः ।
यश्च सर्वगतः साक्षी लोकस्यात्मेति कथ्यते ॥

भूतग्रामशरीरेषु नश्यत्सु न विनश्यति ।
अजो नित्यः शाश्वतश्च निर्गुणो निष्कलस्तथा ॥
निर्द्वादशेभ्यस्तत्त्वेभ्यः ख्यातो यः पञ्चविंशकः ।
पुरुषो निष्क्रियश्चैव ज्ञानदृश्यश्च कथ्यते ॥
यं प्रविश्य भवन्तीह मुक्ता वै द्विजसत्तमाः ।
स वासुदेवो विज्ञेयः परमात्मा सनातनः ॥
पश्य देवस्य माहात्म्यं महिमानं च सुव्रत ।
शुभाशुभैः कर्मभिर्यो लिप्यते न कदाचन ॥
न च जीवं विना ब्रह्मन् धातवश्चेष्टयन्त्युत ।
स जीवः परिसंख्यातः शेषः संकर्षणः प्रभुः ॥
तस्मात्सनत्कुमारत्वं योऽलभत्स्वेन कर्मणा ।
यस्मिंश्च सर्वभूतानि प्रलयं यान्ति संक्षये ॥
स मनः सर्वभूतानां प्रद्युम्नः परिपठ्यते ।
तस्मात्प्रसूतो यः कर्ता कारणं कार्यमेव च ॥
तस्मात्सर्वं संभवति जगत्स्थावरजङ्गमम् ।
सोऽनिरुद्धः स ईशानो व्यक्तः सन् सर्वकर्मसु ॥
यो वासुदेवो भगवान् क्षेत्रज्ञो निर्गुणात्मकः ।
ज्ञेयः स एव राजेन्द्र जीवः संकर्षणः प्रभुः ॥
संकर्षणाच्च प्रद्युम्नो मनोभूतः स उच्यते ।
प्रद्युम्नाद्योऽनिरुद्धस्तु सोऽहङ्कारः स ईश्वरः ॥
अनिरुद्धात्तथा ब्रह्मा तत्रादिकमलोद्भवः ।
ब्रह्मणः सर्वभूतानि चराणि स्थावराणि च ॥
मरीचिरङ्गिरावत्रिः पुलस्त्यः पुलहः क्रतुः ।
वशिष्ठ इति सप्तैते मनसा निर्मिता हि ते ॥

एते वेदविदो मुख्या वेदाचार्याश्च कल्पिताः ।
प्रवृत्तिधर्मिणश्चैव प्राजापत्ये च कल्पिताः ॥
अयं क्रियावतां पन्था व्यक्तिभूतः सनातनः ।
अनिरुद्ध इति प्रोक्तो लोकसर्गकरः प्रभुः ॥
स नः सतत्तु जातश्च सनकश्च सनन्दनः ।
सनत्कुमारः कपिलः सप्तमश्च सनातनः ॥
सप्तैते मानसाः प्रोक्ताः ऋषयो ब्रह्मणः सुताः ।
स्वयमागतविज्ञाना निवृत्तिं धर्ममाश्रिताः ॥
एते योगविदो मुख्याः सांख्यज्ञानविशारदाः ।
आचार्या धर्मशास्त्रेषु मोक्षधर्मप्रवर्तकाः ॥
यो यथा निर्मितो जन्तुर्यस्मिन्यस्मिंश्च कर्मणि ।
प्रवृत्तौ वा निवृत्तौ वा तत्फलं सोऽश्नुते महत् ॥
एकपादस्थिते धर्मे यत्र क्वचन गामिनि ।
कथं कर्त्तव्यमस्माभिर्भगवंस्तद्वदस्व नः ॥
यत्र वेदाश्च यज्ञाश्च तपः सत्यं दमस्तथा ।
अहिंसा धर्मसंयुक्ताः प्रचरेयुः सुरोत्तमाः ॥
स वो देशः सेवितव्यो मा वोऽधर्मः सदा स्पृशेत् ।
इति देवान् प्रति भगवद्वाक्यम् ॥
क्षीरोदधेरुत्तरतः श्वेतद्वीपो महाप्रभुः ।
तत्र नारायणपरा मानवाश्चन्द्रवर्चसः ॥
एकान्तभावोपगतास्ते भक्ताः पुरुषोत्तमम् ।
ते सहस्रार्चिषं देवं प्रविशन्ति सनातनम् ॥
अतीन्द्रिया निराहारा अनिष्पन्दाः सुगन्धिनः ।
एकान्तिनस्ते पुरुषाः श्वेतद्वीपनिवासिनः ॥

एकान्तिनो हि पुरुषा दुर्लभा बहवो नृप।
यद्येकान्तिभिराकीर्णं जगत्स्यात् कुरुनन्दन॥
अहिंसकैरात्मविद्भिः सर्वभूतहिते रतैः।
भवे कृतयुगप्राप्तिराशीः कर्म विवर्जितः॥
चतुर्विधास्तु पुरुषा भक्ता एव हरिप्रियाः।
तेषामेकान्तिनः श्रेष्ठा ये चैवानन्यदेवताः॥
भक्तं प्रति विशेषस्ते मया सम्यक् प्रकीर्त्तितः।
सात्विकः पुरुषव्याघ्र भवेन्मोक्षाय निश्चितः॥
अत्रापि स विजानाति पुरुषं ब्रह्मवित्तमम्।
नारायणपरो मोक्षस्ततो वै सात्विकः स्मृतः॥
सांख्ययोगेन तुल्यो हि धर्म एकान्तसेवितः।
नारायणेन दृष्टश्च प्रतिबुद्धो भवेत् पुमान्॥
एवमात्मेच्छया ब्रह्मन् प्रतिबुद्धो न जायते।
राजसी तामसी चैव व्यामिश्रे प्रकृती स्मृते॥
तदात्मकं हि पुरुषं जायमानं पुनः पुनः।
प्रवृत्तिलक्षणैर्युक्तं हरिर्नावेक्षते स्वयम्॥
पश्यत्येनं जायमानं ब्रह्मा लोकपितामहः।
रजसा तमसा चैव मानवं समभिप्लुतम्॥
कामं देवाश्च ऋषयः सत्वस्था मुनयस्तथा।
हीनाः सत्वेन सूक्ष्मेण ततो वैकारिणः स्मृताः॥
नारदस्य वचः श्रुत्वा शुकः परमबुद्धिमान्।
संचिन्त्य मनसा धीरो निश्चयं नाध्यगच्छत॥
पुत्रदारैर्महान् क्लेशः विद्याम्नाये महान् श्रमः।
किंतु स्याच्छाश्वतं स्थानमल्पक्लेशं महोदयम्॥

ततो मुहूर्त्तं संचिन्त्य निश्चितां गतिमात्मनः ।
ततः प्रदक्षिणं कृत्वा देवर्षिं नारदं ततः ॥
निवेदयामास च तं स्वयोगपरमर्थये ।

शुक उवाच ।

दृष्टो मार्गः प्रवृत्तोऽस्मि स्वस्ति तेऽस्तु तपोधन ।
त्वत्प्रसादाद्गमिष्यामि गतिमिष्टां महाद्युते ॥
नारदेनाभ्यनुज्ञातः शुको द्वैपायनात्मजः ।
अभिवाद्य पुनर्योगं चकार विधिवत्तदा ॥
स गतिं परमां प्राप्तो दुःप्रापामजितेन्द्रियैः ।
ततस्तस्मिन् पदे नित्ये निर्गुणे लिङ्गवर्जिते ॥
ब्रह्मणि प्रत्यतिष्ठत्स विधूमोऽग्निरिव ज्वलन् ।
तं प्रकामं तमाघ्राय पिता स्नेहसमन्वितः ॥
उत्तमां गतिमास्थाय पृष्ठतोऽनुससार ह ।
महायोगगतिं धन्यां व्यासः स्थित्वा महातपाः ॥
निमिषान्तरमात्रेण शुकाभिपतनं ययौ ।
स ददर्श द्विधा कृत्वा पर्वताग्रं शुकं गतम् ॥
सशंसुरृषयस्तस्य कर्म पुत्रस्य तत्तदा ।
ततः शुकेति दीर्घेण शब्देनाक्रन्दितस्तदा ॥
स्वयं पित्रा स्वरेणोच्चैस्त्रीन् लोकाननुनाद्य वै
शुकः सर्वगतो भूत्वा सर्वात्मा सर्वतोमुखः ।
प्रत्यभासत धर्मात्मा भोः शब्देनानुनादयन् ।
तत एकाक्षरं नादं भोरित्येवं समीरयन् ॥
प्रत्याहरज्जगत्सर्वमुच्चैः स्थावरजङ्गमम् ।
ततःप्रभृति वाद्यापि शब्दोऽनुच्चारितान्पृथक्

गिरिगह्वरपृष्ठेषु व्याहरन्ति शुकं प्रति।
अन्तर्हितः प्रभावं स दर्शयित्वा शुकस्तदा॥
गुणान्सन्त्यज्य शब्दादीन् पदमभ्यगमत्परम्।
महिमानं तु तं दृष्ट्वा पुत्रस्यामिततेजसः॥
निषसाद गिरिप्रस्थे पुत्रमेवानुचिन्तयन्।
तदेव गन्धर्वैर्वृतो महर्षिगणपूजितः॥
पिनाकहस्तो भगवानभ्यगच्छत शङ्करः।
तमुवाच महादेवः सान्त्वपूर्वमिदं वचः॥
पुत्रशोकाभिसन्तप्तं कृष्णद्वैपायनं तदा।
यावत् स्थास्यन्ति गिरयो यावत्स्थास्यन्ति सागराः॥
तावत्तवाक्षया कीर्त्तिः सपुत्रस्य भविष्यति।
छायां सपुत्र सदृशीं सर्वतोपगतां सदा॥
द्रक्ष्यसे त्वञ्च लोकेऽस्मिन्मत्प्रसादान्महामुने।
सोऽनुनीतो भगवता स्वयं रुद्रेण भारत॥
छायां पश्यन्समावृत्तः कृपया परया मुदा।
इति जन्मगतिश्चैव शुकस्य भरतर्षभ॥
विस्तरेण समाख्याता यन्मां त्वं परिपृच्छसि।
एतदाचष्ट ते राजन् देवर्षिर्नारदः पुरा॥
व्यासश्चैव महायोगी संजल्पेषु पदे पदे।
इतिहासमिमं पुण्यं मोक्षधर्मार्थसंहितम्॥
धारयेद्यः शमपरः स गच्छेत्परमां गतिम्।

इति नारदशुकसंवादः।

योगवाशिष्ठे।

वशिष्ठ उवाच।

बन्धो हि वासनाबन्धो मोक्षः स्याद्वासनाक्षयः।
वासनां त्वं परित्यज्य मोक्षार्थित्वमपि त्यज॥
मानसीं वासनां पूर्वं त्यक्त्वा विषयवासिताम्।
मैत्र्यादिभावना नाम्नी गृहाणामलवासनाम्॥
तामप्यन्तः परित्यज्य मनोबुद्धिसमन्विताम्।
शेषे स्थिरसमाधाने येन त्यजसि तत्त्यज॥
समाधिमथ कर्माणि मा करोतु करोतु वा।
हृदयेनात्तसर्वाशो मुक्त एवोत्तमाशयः॥
नैष्कर्म्येण न तस्यार्थो न तस्यार्थोऽस्ति कर्मभिः।
न समाधिजयाभ्यां वा यस्य निर्वासनं मनः॥
विचारितमलं शास्त्रं चिरमुद्ग्राहितं मिथः।
सन्त्यक्तवासनान्मौनादृते नास्त्युत्तमं पदम्॥
दृष्टं द्रष्टव्यमखिलं भ्रान्त्वा भ्रान्त्वा दिशो दश।
जना कतिपया एव यथा वस्त्ववलोकितः॥
ये केचन समारम्भा ये जनस्य क्रियाक्रमाः।
ते सर्वे देहमात्रार्था आत्मार्थं तु न किंचन॥
सर्वत्रयश्च भूतानि षष्ठं किंचिन्न विद्यते।
पाताले भूतले स्वर्गे रतिमेतु क्व धीरधीः॥
युक्त्या वै चरतो ज्ञस्य संसारो पदाकृतिः।
दूरसन्त्यक्तयुक्तेस्तु महामत्तार्णवोपमः॥
न केचन जगद्भावास्तत्त्वज्ञं रञ्जयन्त्यमी।
नागरं नागरी कान्तं कुग्रामललना इव॥

२८॥

स्फारब्रह्ममलाम्भोधेः फेनाः सर्वे कुलाचलाः ।
चिदादित्यमहातेजो मृगतृष्णा जगच्छ्रियः ॥
रसायनमयी शान्ता परमानन्ददायिनी ।
नानन्दयति कं नाम साधुसंगतिचन्द्रिका ॥
नातः परतरं किंचिन्मन्ये कुशलमात्मनः ।
सन्तो तदनुगम्यन्ते संत्यक्तसकलैषणाः ॥
दीर्घायुषो महान्तोऽपि सन्तोऽपि बलिनोऽपि च ।
सर्वे एव निगीर्यन्ते कालेनाकलितात्मना ॥
मनसि ग्रसिताः पाशास्तृष्णामोहमदादयः ।
मनसैव मनो रामच्छेदनीयं विजानतः ॥
विवेकेनातितीक्ष्णेन वलादय इवायसा ।
मनसैव मनश्छिन्धि संसारभ्रमशान्तये ॥
क्षालयन्ति मलेनैव मलक्षालनकोविदाः ।
जीवस्य त्रीणि रूपाणि स्थूलसूक्ष्मपराणि तु ॥
तत्रास्य मत्परं रूपं तद्भज हे परित्यज ।
पाणिपादमयो योयं देहो भोगाय वलाति ॥
मोक्षार्थमेतज्जीवस्य रूपं स्थूलमिह स्थितम् ।
स्वसंकल्पमयाकारं यावत्संसारभावि यत् ॥
चित्तं तद्विद्धि जीवस्य रूपं रामातिवाहिकम्
आद्यन्तरहितं सत्यं चिन्मात्रं निर्विकल्पकम् ॥
एतद्धि परमं रूपं जीवस्याद्यं तृतीयकम् ।
एतत्तुर्यपदं शुद्धं अत्र बद्धपदो भव ॥

श्रीराम उवाच ।

जाग्रत्स्वप्नसुषुप्तेषु स्थितं चिच्छ्वयलचितम् ।
तुर्यं ब्रूहि विशेषेण विधिवन्मुनिनायक ॥

वसिष्ठ उवाच।

अहंभावानहंभावौ त्यक्त्वा सदसती तथा।
यदसक्तं समं स्वच्छं स्थितं यत्तुर्यमुच्यते॥
सा स्वस्था समता शान्ता जीवन्मुक्तव्यवस्थितिः।
साक्ष्यवस्थाप्यवहृतौ सा तुर्यकल्पनोच्यते॥
नैतज्जाग्रन्न तत्स्वप्नः संकल्पानामसम्भवात्।
सुषुप्तभावे वा प्येतदभावाज्जडतः स्थितेः॥
सा तं सम्यक् प्रबुद्धानां यथास्थितमिदं जगत्।
विलीनं तुर्यमित्याहुरबुद्धानां स्थिरं स्थितम्॥
अहंकारकलात्यागे समतायाः समुद्भते।
त्रिषराशौ कृते चित्ते तुर्यावस्थोपतिष्ठते॥
अस्य संसारवृक्षस्य सर्वोपद्रवदायिनः।
उपाय एक एवास्ति मनसः स्वस्य निग्रहः॥
अविद्यासरितः पारमात्मलाभादृते किल।
राम नासाद्यते तद्धि परमव्ययमुच्यते॥
केचिद्धासंख्यजन्मानः केचिद्द्वित्रिभवान्तराः।
उत्पत्स्यन्तेऽपि केवान्ये कणौघा इव निर्झरात्॥
अनन्ताः पितरो यान्ति यान्त्यनन्ताश्च मातरः।
इह संसारिणां पुंसां वने पादपपर्णवत्॥
मरणस्य मुने राज्ञो जराधवलचामरा।
आगच्छतोऽग्रे निर्यान्ति व्याधिव्याधिशताकुलाः॥
परमेष्ठ्यपि निष्ठावान् हृदये हरिरप्यजः।
भवोऽप्यभावमायाति कैवास्था मादृशे जने॥
ब्रह्मा विष्णुश्च रुद्रश्च सर्वा वा भूतजातयः।

नाशमेवानुधावन्ति सलिलानीव वाडवम् ॥
विषं विषयवैषम्यं न विषं विषमुच्यते ।
जन्मान्तरघ्ना विषया एकदेहहरं विषम् ॥
धीरोप्यति बहुज्ञोपि प्रबुद्धोपि महानपि ।
तृष्णया बध्यते जन्तुः सिंहः शृंखलया यथा ॥
जातास्त एव जगति जन्तवः साधु जीवितः ।
ये पुनर्नेह जायन्ते शेषा जठरगर्दभाः ॥
भारोऽविवेकिनां शास्त्रं भारो ज्ञानं च रागिणः ।
अशान्तस्य मनो भारो भारो नात्मविदो वपुः ॥
कदाचिन्मृरामयी भूमिः कदाप्यासीद्द्रुमरामयी ।
कदाचित्काञ्चनमयी कदाचिन्मांसमप्यभूत् ॥
पूर्णे मनसि संपूर्णं जगत्सर्वं सुधाद्रवैः ।
उपानद्गूढपादस्य ननु चर्मास्तृतेव भूः ॥
यैरेव जायते रागो मूर्खस्याधिगतैर्गतैः ।
तैरेव भोगैः प्राज्ञस्य विराग उपजायते ॥
व्यवहारी प्रबुद्धो यः संबुद्धो यो वने स्थितः ।
द्वावेतौ सुसमौ नूनमसन्देहपदं गतौ ॥
चेतसो यदकर्तृत्वं तत्समाधानमुत्तमम् ।
तं विद्धि केवलीभावं सा शुभा निर्वृत्तिः पु
गृहमेव गृहस्थानां सुसमाहितचेतसाम् ।
शान्ताहंकृतिदोषाणां विजना वनभूमयः ॥
महतां संगमे नार्त्तिः कस्य नाम न नश्यति ।
यस्मिन् देशे गिरौ तथा नास्ति सज्जनपादपः
सफलः शीतलच्छायो न तत्र निवसेद्बुधः ।

यावत्तीर्णो न संसारस्तवत्र कुशलं कुतः ॥
यावन्नाधिगतं ज्ञानं यावन्न समतोदिता ।
यावन्नाभ्युदितो बोधस्तावन्नः कुशलं कुतः ।
आत्मलाभं विना साधो विना ज्ञानमहौषधम् ॥
उदेति पुनरेवेयं दुःसंसृतिविसूचिका ।
मनागपि विचारेण चेतसः स्वस्य निग्रहः ॥
मनागपि कृतो येन तेनाप्तं जगतः फलम् ।
गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा ॥
न विचारपरं चेतो यस्यासौ मृत उच्यते ।
अशेषेण परित्यागो वासनाया य उत्तमः ॥
मोक्ष इत्युच्यते सद्भिः स एव विमलक्रमः ।
यावत्तु न प्रबुद्धस्त्वं तावत्सद्वचसैव ते ॥
निश्चयो भवतूद्दामो नास्त्यविद्येति निश्चलः ।
एवं जीवो हि संकल्प्य वासनारज्जुवेष्टितः ॥
दुःखजालपरीतात्मा क्रमादायाति नीचताम् ।
अपर्यन्तस्य कालस्य कियानंशः शरच्छतम् ॥
येषां निमेषणोन्मेषैर्जगतां प्रलयोदयाः ।
तादृशाः पुरुषाः सन्ति मादृशाङ्गणनैव का ॥
अपवित्रमपथ्यं च विषसंपर्कदूषितम् ।
भुक्ता जरयति ज्ञानी क्लिष्टं नष्टं च मृष्टवत् ॥
अस्ति कल्पतरुः श्रीमान् शृङ्गे सर्वमनोहरे ।
तस्य कल्पतरोर्मूर्ध्नि दक्षिणस्कन्धकोटरे ॥
कलधौतलताप्रोते विद्यते विमलालयः ।
तस्मिन्निवसति श्रीमान् भुशुण्डो नाम वायसः ॥

चिरजीवी तथा स्वर्गे न भूतो न भविष्यति ।
स दीर्घायुः स नीरोगः स श्रीमान् स महामतिः ॥
भुशुण्डं विहगं द्रष्टुमहं यातः कुतूहलात् ।
भुशुण्डः संस्थितो यत्र मेरोः शृङ्गोत्तमोत्तमे ॥
कल्पाङ्घ्रिमहमद्राक्षं निमेषार्द्धेन राघव ।
भुशुण्डस्तु वशिष्टोऽयं प्राप्त इत्येव बुद्धवान् ॥
यत्र पुञ्जात् समुत्तस्थौ मेघशायी इवाचलात् ।
हे मुने स्वागतमिति प्रोवाच मधुराक्षरम् ॥
सङ्कल्पमात्रजाताभ्यां कराभ्यां कुसुमाञ्जलिम् ।
मह्यमाशु तदैवादान्मेघो हैममिवोत्करम् ॥
इदमासनमित्युक्त्वा नवं कल्पतरुच्छदम् ।
उपानिन्ये महाबुद्धिः स्वयमेव खगाधिपः ॥
तस्मिन् कल्पलतागुञ्जे उपविष्टो महामुने ।
अथो पाद्यादि संपाद्य भुशुण्डस्तु महानसौ ॥
मामुवाच महातेजाः सौहार्दान्मधुराक्षरम् ।
किमर्थमद्यागमनक्लेशेनात्मा कदर्थितः ॥
वचनश्रवणोत्कानामाज्ञां नो दातुमर्हसि ।
त्वत्यादर्शनादेव सर्वं ज्ञातं महामुने ॥
चिरजीवितवार्त्ताभिरियं स्मृतिमागता ।
ज्ञातस्त्वदागमोऽप्येवं त्वां पृच्छामीति यन्मुने ॥
भवद्वाक्यामृतास्वादवाञ्छा तत्र विजृम्भते ।
इत्युक्त्वासौ पक्षी विहङ्गश्चिरजीवितः ॥
त्रिकालामलसंवेदी तत्र प्रोक्तमिदं मया ।
विहङ्गम महाराज सत्यमेतत्त्वयोच्यते ॥

द्रष्टुमभ्यागतोऽस्म्यद्य त्वामेव चिरजीविनम्।
कस्मिन् कुले भवान् जातो ज्ञातज्ञेयः कथं भवान्॥
कियदायुश्च ते साधो वृत्तं स्मरसि किंच वा।
केनायं वा निवासस्ते निर्दिष्टो दीर्घदर्शिना॥
अथ राम भुशुण्डोऽसौ न प्रहृष्टो न जिह्मधीः।
यत्पृच्छति मुने सर्वं शृणु त्वं कथयाम्यहम्।
इत्युक्त्वा विहगाधीशः सर्वं कथितवानिदम्॥

भुशुण्ड उवाच।

अलंबुसेति विख्याता माता मानद विद्यते।
तस्यास्ति वाहनं काको वैष्णव्या गरुडो यथा॥
रथहंस्यः पिता ब्राह्म्यः काकश्चालम्बुसारथः।
संजातरतयस्तत्र सर्वा हंस्यो मदालसाः॥
रेमिरे सह कालेन चण्डकेनाथ तास्तदा।
अथ ता गर्भधारिण्यो बभूवुरतितोषिताः॥
देव्यश्च कृतनृत्यास्ताः प्रशान्तमदताङ्गताः।
सर्वाः सन्तुष्टमनसः स्वास्वामुपययुर्दिशम्।
अन्तर्वत्न्यो बभूवुस्ता ब्राह्म्यो हंस्यो मुनीश्वर।
वृत्तान्तं कथयामासुर्ब्राह्म्यै देव्यै यथास्थितम्॥
हे वत्स्यः सांप्रतं वत्सवत्यो मे रथकर्मणि।
न समर्था भवत्यो हि स्वैरं चरत सांप्रतम्॥
इति गर्भालसा हंसीरुक्त्वा देवी ह्यलंबुसा।
निर्विकल्पसमाधाने ब्राह्मी तस्थौ यथासुखम्।
हंस्यो विपक्वगर्भास्ताः सुवते स्म यथाक्रमम्।
वैरञ्चे संसृति स्फारे तनयानेकविंशतिम्॥

एवं ताभ्यस्तु हंसीभ्यो जाता वयमिमे मुने ।
भ्रातरश्चण्डतनया वायसा एकविंशतिः ॥
मातृभिश्च हंसीभिर्ब्राह्मी भगवती ततः ।
चिरमाराधितास्माभिः समाधिविरता सती ॥
प्रसादपरया काले भगवत्या ततः स्वयम् ।
तथानुगृहीता स्मो यथा मुक्ता वयं स्थिताः ॥
तिष्ठाम क्वेति निश्चित्य पितुः पार्श्वं वयं गताः ।
वन्दित्वा पितरं तत्र नत्वा देवीमलंबुसाम् ॥
तेनायं सर्वसत्वानामगम्यः कल्पपादपः ।
कथितं स्थानमस्माकं ज्ञातिना सर्वदर्शिना ॥
ततः ब्रह्मनमस्कारात्तस्माद्देशाद्विनिर्गताः ।
द्रुमं कल्पतरुं प्राप्य तिष्ठामो विगतज्वराः ॥
अद्य मे फलितं पुण्यैश्चिरकालोपसंभृतैः ।
निर्विघ्नमेव पश्यामि यद्भवन्तं मुनीश्वर ॥
तिष्ठतामिह नः कालो भूयानतिगतो मुने ।
युगानां पङ्क्तयः क्षीणाः कल्पानां च तथाऽनघ ॥
एतावताथ कालेन सर्व एव ममानुगाः ।
तनूस्तृणमिव त्यक्त्वा सर्वे परिणताः पदे ॥
दीर्घायुषो महान्तोऽपि सन्तोऽपि बलिनोऽपि च ।
सर्व एव निगीर्यन्ते कालेनाकलितात्मना ॥
मत्संकल्पवशेनैव कल्पे कल्पे ननः पुनः ।
अस्मिन्नेव गिरेः शृङ्गे तरुरित्थं भवत्ययम् ॥
यथा तिष्ठसि पक्षीन्द्र धारणाभिरखण्डितः ।
कल्पान्तेषु तथा कस्मान्ने तिष्ठन्ति योगिनः ॥

भुशुण्ड उवाच।

ब्रह्मनियतिरेषा हि दुर्लङ्घ्या पारमेश्वरी।
मयेदृशेन वै भाव्यं भाव्यमन्यैस्तु तादृशैः॥

वशिष्ठ उवाच।

ज्ञानविज्ञानवान् धीरो योगयोग्यमनोगतिः।
किञ्चित् स्मरसि कल्याणं चित्रमत्र जगत्त्रये॥
बृहत्तरशिला वृक्षा प्रजाततरुवीरुधम्।
अशैलवनवृक्षौघां संस्मरामि धरामधः॥
जन्मेन्दुभास्करादीनां इन्द्रोपेन्द्रव्यवस्थितिम्।
हिरण्याक्षापहरणं वाराहोद्धरणं क्षितेः॥
कल्पनं पार्थिवानां च वेदानयनमेव च।
मन्दरोन्मूलनं वार्द्धेरमृतार्थं च मन्थनम्॥
अजातपक्षो गरुडः सागराणां च संभवः।
इत्यादिकाश्च स्मृतयः ख्यातातीतजनक्रमाः॥
बालैरपि हि तास्तात स्मर्यन्ते तासु को ग्रहः।
ततो जगति जातेषु भगवन् युष्मदादिषु॥
भरद्वाजपुलस्त्यात्रिनारदेन्द्रमरीचिषु।
गौरीसरस्वतीलक्ष्मीगायत्र्याद्यासु भूरिषु॥
इत्यद्यतनसर्गेषु स्मरणे गणनैव का।
मुने ते ब्रह्मपुत्रस्य जन्माष्टकमिदं किल॥
संस्मराम्यष्टमे सर्गे तस्मिंस्त्वं मम सङ्गतः।
कदाचिज्जायसे व्योम्नः कदाचिज्जायसे जलात्॥
कदाचिज्जायसे शैलात् कदाचिज्जायसेऽनलात्।
अन्तर्द्धानं गता वेदा वारपञ्चकमुद्धृताः॥

स्मरामि द्वादशं वेदमच्युताम्भोधिमन्थनम्।
वारत्रयं हिरण्याक्षनीतां च वसुधामधः॥
रेणुकात्मजन्मतां षष्ठवारमिमं हरेः।
शतं कलियुगानां च हरेर्बुद्धदशाः शतम्॥
त्रिंशत्त्रिपुरविक्षोभान् द्वौ दक्षाध्वरसंक्षयौ।
बाणार्थमष्टौ संग्रामान् ज्वरप्रथमनन्नयम्॥
युगं प्रतिधियां पुंसां न्यूनाधिकतया मुने।
क्रियाङ्गपाठवैचित्र्ययुक्तान् वेदान् स्मराम्यहम्॥
एकार्थानि समग्राणि बहुपाठानि वानघ।
पुराणानि प्रवर्त्तन्ते निवृत्तानि युगं प्रति॥
इतिहासमहाश्चर्यमन्यद्रामायणाभिधम्।
ग्रन्थलक्षप्रमाणं च ज्ञानशास्त्रं स्मराम्यहम्॥
वाल्मीकिनाम्ना जीवेन तेनैवान्येन वा कृतम्।
एतच्च द्वादशं वारं निर्मितं विस्मृतिं गतम्॥
द्वितीयमेतस्य समं भारतं नाम नामतः।
व्यासाभिधेन जीवेन तेनैवान्येन वा कृतम्॥
एतत्तु सप्तमं वारं निर्मितं विस्मृतिं गतम्।
राक्षसक्षतये विष्णोर्महीमवतरिष्यतः॥
अधुनैकादशं जन्म रामनाम्नो भविष्यति।
वसुदेवगृहे विष्णोर्भुवो भारनिवृत्तये॥
अधुना षोडशं जन्म भविष्यति मुनीश्वर।
जगन्मयी भ्रान्तिरियं न कदाचिन्न विद्यते॥
विद्यते न कदाचिच्च जलबुद्बुदवत्स्थिता।
दोषमुक्ताफलप्रोता वासनातन्तुसन्ततिः॥

हृदि न ग्रथिता यस्य मृत्युस्तं न जिघांसति ।
विश्वासवृत्तक्रकचाः सर्वदेहलताघुणाः ॥
आधयो यं न भिन्दन्ति मृत्युस्तं न जिघांसति ।
रागद्वेषविषापूर्णः स्वमनोबिलमन्दिरः ॥
लोभव्यालो न भुङ्क्ते यं तं मृत्युर्न जिघांसति ।
पीताशेषविवेकाम्बुः शरीराम्भोधिवाडवः ॥
न निर्दहति यं कोपस्तं मृत्युर्न जिघांसति ।
यन्त्रं तिलानां कषति राशिमुग्रमिवाकुलम् ॥
यं पीडयति नानङ्गस्तं मृत्युर्न जिघांसति ।
एते ब्रह्मन्महादोषाः संसारव्याधिहेतवः ॥
मनागपि न लुम्पन्ति चित्तमेकं समाहितम् ।
न भूतं न भविष्यच्च चिन्तयामि कदाचन ॥
दृष्टिमालम्ब्य तिष्ठामि वर्त्तमानामिहात्मना ।
इदमद्य मया लब्धं इदं प्राप्स्यामि सुन्दरम् ॥
इति चिन्ता न मे तेन चिरं जीवाम्यनामयः ।
न स्तौमि न च निन्दामि क्वचित्किंचित्कदाचन ॥
आत्मनोऽन्यस्य वा साधो तेन जीवाम्यनामयः ।
सुखितेऽस्मिन् सुखासीनो दुःखितो दुःखिते जने ॥
सर्वस्य प्रियमित्रं च तेन जीवाम्यनामयः ।
आपद्यचलधीरोऽस्मि जगन्मित्रं च संपदि ॥
भावाभावेषु नैवास्ति तेन जीवाम्यनामयः ।
न तुष्यति शुभप्राप्तौ नाशुभेष्वपि खिद्यति ॥
मनो मम समो नित्यं तेन जीवाम्यनामयः ।
परमं त्यागमालम्ब्य सर्वमेव सदैव हि ॥

जीवितादि मया त्यक्तं तेन जीवाम्यनामयः ।
आशापाशविनुन्नायाश्चित्तवृत्तेः समाहितः ॥
संस्पर्शं न ददाम्यन्तस्तेन जीवाम्यनामयः ।
एकस्मिन्निर्मले येन पदे परमपावने ॥
संश्रिता चित्तविश्रान्तिस्तं मृत्युर्न जिघांसति ।
आधिव्याधिसमुत्थानि चलितानि महाभ्रमैः ॥
न विलुम्पन्ति दुःखानि चित्तमेकं समाहितम् ।
एषा हि चित्ते विश्रान्तिर्यया प्राणसमाधिना ॥
क्रमेणानेन संप्राप्ता स्वयमात्मनि निर्मले ।
खेदोल्लासविलासेषु स्वात्मकर्त्तृतयैकया ॥
स्वसंकल्पे लयं याते समतैवावशिष्यते ।
समता सर्वभावेषु यासौ सत्या परा स्थितिः ॥
तस्यामवस्थितं चित्तं न भूयो जन्मभाग् भवेत् ।
अयं सोऽहमयं नाहं करोमीदमिदन्तु न ॥
इति भावानुसन्धानमयी दृष्टिर्न तुष्टये ।
सा कालसूत्रपदवी सा महावीचिवागुरा ॥
सासिपत्रवनश्रेणी या देहे ऽहमिति स्थितिः ।
सा त्याज्या सर्वभावेन सर्वनाशेऽप्युपस्थिते ॥
स्प्रष्टव्या सा न भव्येन सश्वमांसेव पुक्कसी ।
तया सुदूरोज्झितया दृष्टौ पटललेखया ॥
उदेति परमा दृष्टिर्ज्योत्स्नेव विगताम्बुदा ।
ययाभ्युदितया राम तीर्यतेऽयं भवार्णवः ॥
एतत्ते कथितं ब्रह्मन् यथा ऽस्मि चिरजीवितः ।
त्वदाज्ञामात्रसिद्ध्यर्थं धार्ष्ट्येन ज्ञानपारगः ।

इति सङ्कथितं चित्रं भुशुण्डोदन्तमुत्तमम् ॥
श्रुत्वा विचार्य्यं चैवान्तर्यत् युक्तं तत्समाचर ।

इति वसिष्ठभुशुण्डसंवादः ।

मुक्तिमिच्छसि चेत्तात विषयान्विषवत्त्यज ।
क्षमार्जवदयातोषसत्यं पीयूषवद्भज ॥
न पृथ्वी न जलं नाग्निर्न वायुर्द्यौर्न वा भवान् ।
एषां साक्षिणमात्मानं चिद्रूपं विद्धि मुक्तये ॥
यदि देहं परित्यज्य चिति विश्रम्य तिष्ठसि ।
अधुनैव सुखी शान्तो बन्धमुक्तो भविष्यसि ॥
न त्वं विप्रादिको वर्णो नाश्रमी नाक्षगोचरः ।
असङ्गोऽसि निराकारो विश्वसाक्षी सुखी भव ॥
धर्माधर्मौ सुखं दुःखं मानसानि न ते विभो ।
न कर्त्तासि न भोक्तासि मुक्त एवासि सर्वदा ॥
एको द्रष्टासि सर्वस्य मुक्तप्रायोसि सर्वदा ।
अयमेव हि ते बन्धो द्रष्टारं पश्यसीतरम् ॥
अहं कर्त्तेत्यहंमानमहाकृष्णाहिदंशितः ।
नाहं कर्त्तेति विश्वासामृतं पीत्वा सुखी भव ॥
एको विशुद्धबोधोऽहमितिनिश्चयवह्निना ।
प्रज्वाल्य ज्ञानगहनं वीतशोकः सुखी भव ॥
मुक्ताभिमानी मुक्तोऽहं बद्धो बद्धाभिमान्यपि ।
किंवदन्तीह सत्येह या मतिः सा गतिर्भवेत् ॥
आत्मा साक्षी विभुः पूर्ण एको मुक्तश्चिदक्रियः ।
असङ्गो निःस्पृहः शान्तो भ्रमात्संसारवानिव ॥
हरो यद्युपदेष्टा ते हरिः कमलजोऽपि वा ।

तथापि न तव स्वस्थं सर्वविस्मरणादृते॥
तेन ज्ञानफलं प्राप्तं योगाभ्यासफलं तथा।
तृप्तः स्वस्थेन्द्रियो नित्यमेकाकी रमते तु यः॥
मुक्तो न विषयद्वेष्टा न वा विषयलोलुपः।
असंसक्तमना नित्यं प्राप्तं प्राप्तमुपाश्नुते॥
अहो साहसमुद्यन्तु पश्यन्तु विबुधाः स्फुटम्।
वैष्णव्या मायया यस्मा विचारविमुखाः कृताः॥

एकादशस्कन्धे श्रीकृष्णोद्धवसंवादे।

श्रीउद्धव उवाच।

यमः कतिविधः प्रोक्तो नियमो वा ऽरिकर्षन।
कः शमः को दमः कृष्ण का तितिक्षा धृतिः प्रभो॥
किं दानं किं तपः शौर्यं किं सत्यमृतमुच्यते।
कस्त्यागः किं धनं चेष्टं को यज्ञः का च दक्षिणा॥
पुंसः किंस्विद्बलं श्रीमन् दया लाभश्च केशव।
का विद्या ह्रीः परा का श्रीः किं सुखं दुःखमेव वा॥
कः पण्डितः कश्च मूर्खः कः पन्था उत्पथश्च कः।
कः स्वर्गो नरकः कःस्वित्को बन्धुरुत किं गृहम्॥
क आढ्यः को दरिद्रो वा कृपणः क ईश्वरः।
एतान् प्रश्नान् मम ब्रूहि विपरीतांश्च सत्पते॥

श्रीभगवानुवाच।

अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसञ्चयः।
आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाऽभयम्॥
शौचं जपस्तपो होमः श्रद्धातिथ्यं मदर्चनम्।
तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम्॥

एते यमाः सनियमा उभयोर्द्वादश स्मृताः।
पुंसामुपासितास्तात यथाकामं दुहन्ति हि॥
शमो मन्निष्ठता बुद्धेर्दम इन्द्रियसंयमः।
तितिक्षा दुःखसंमर्षो जिह्वोपस्थजयो धृतिः॥
दण्डन्यासः परं दानं कामत्यागस्तपः स्मृतम्।
स्वभावविजयः शौर्यं सत्यं च समदर्शनम्॥
ऋतञ्च सूनृता वाणी कविभिः परिकीर्त्तिता।
कर्मस्वसङ्गमः शौचं त्यागः संन्यास उच्यते॥
धर्म इष्टं धनं नृणां यज्ञोऽहं भगवत्तमः।
दक्षिणा ज्ञानसंदेशः प्राणायामः परं बलम्॥
भगो म ऐश्वरो भावो लाभो मद्भक्तिरुत्तमः।
विद्यात्मनि भिदाबाधो जुगुप्सा ह्रीरकर्मसु॥
श्रीर्गुणा नैरपेक्ष्याद्याः सुखं दुःखसुखात्ययः।
दुःखं कामसुखापेक्षा पण्डितो बन्धमोक्षवित्॥
मूर्खो देहाद्यहंबुद्धिः पन्था मन्निगमः स्मृतः।
उत्पथश्चित्तविक्षेपः स्वर्गः सत्त्वगुणोदयः॥
नरकस्तमउन्नाहो बन्धुर्गुरुरहं सखे।
गृहं शरीरं मानुष्यं गुणाढ्यो ह्याढ्य उच्यते॥
दरिद्रो यस्त्वसन्तुष्टः कृपणो यो जितेन्द्रियः।
गुणेष्वसक्तधीरीशो गुणसंगो विपर्ययः॥
एत उद्धव ते प्रश्नाः सर्वे साधु निरूपिताः।
किं वर्णितेन बहुना लक्षणं गुणदोषयोः॥
गुणदोषदृशिर्दोषो गुणस्तूभयवर्जितः।
योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया॥

ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ।
निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु ॥
तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कामिनाम् ।
यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ॥
न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ।
तावत्कर्माणि कुर्वीत न निर्विद्येत यावता ॥
मत्कथाश्रवणे वापि श्रद्धा यावन्न जायते ।
स्वधर्मस्थो यजन् यज्ञैरनाशीः काम उद्धव ॥
न याति स्वर्गनरकौ यद्यन्यन्न समाचरेत् ।
अस्मिँल्लोके वर्त्तमानः स्वधर्मस्थोऽनघः शुचिः ॥
ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया ।
स्वर्गिणोऽप्येनमिच्छन्ति लोकं निरयिणस्तथा ॥
साधकं ज्ञानभक्तिभ्यामुभयं तदसाधकम् ।
ना नरः स्वर्गतिं कांक्षेन्नारकीं च विचक्षणः ॥
नेमं लोकं च कांक्षेत देहावेशात्प्रमाद्यति ।
एतद्विद्वान् पुरा मृत्योरभवाय घटेत सः ॥
अप्रमत्त इति ज्ञात्वा मर्त्यमप्यर्थसिद्धिदम् ।
नृदेहमाद्यं सुलभं दुर्लभं प्लवं सुकल्पं गुरुकर्णधारम् ॥
मयाऽनुकूलेन नभस्वतेरितं पुमान् भवाब्धिं न तरेत्स आत्महा ।
यदि कुर्यात्प्रमादेन योगी कर्म विगर्हितम् ॥
योगेनैव दहेदंहो नान्यत्तत्र कदाचन ।
स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्त्तितः ॥
कर्मणां जात्यशुद्धानामनेन नियमः कृतः ।
गुणदोषविधानेन सङ्गानां त्याजनेच्छया ॥

भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि मयि दृष्टेऽखिलात्मनि ॥
न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः ।
साधूनां समचित्तानां बुद्धेः परमुपेयुषाम् ॥
एवमेतान्मयादिष्टा ननु तिष्ठन्ति मे पथः ।
क्षेमं विन्दन्ति मत्स्थानं यद् ब्रह्म परमं विदुः ॥

इति कृष्णोद्धवसंवादः ।

तद्ध्यानं यत्र गोविन्दः सा कथा यत्र केशवः ।
तत्कर्म यत्तदर्थाय किमन्यैर्बहुभाषितैः ॥
न तत्पिता तु पुत्राय न शिष्याय गुरुस्तथा ।
परमार्थं परं ब्रूयाद्यदेतत्ते मयोदितम् ॥
एतत्पवित्रमारोग्यं धन्यं दुःखमनाशनम् ।
सुखप्रीतिकरं नृणां मोक्षकृद्यत्तवेरितम् ॥
अहन्यहनि शृण्वन्ति ये नरा भक्तिसागरम् ।
श्लोकार्द्धं श्लोकमेकं वा गोप्रदानाद्विशिष्यते ॥
अहोरात्रकृतं पापं श्रोतुमिच्छुः प्रणश्यति ।
शृण्वन्विप्रो वेदवित् स्यात् क्षत्रियः पृथिवीपतिः ॥
ऋद्धिं प्रयाति वैश्यश्च शूद्रश्चारोग्यमृच्छति ।
दिव्यान्तरिक्षभौमाद्यदुस्वप्नाद्यभिवारकान् ॥
यच्चान्यद् दुरितं किंचित्तत्सर्वं हन्ति केशवः ।
प्रवृत्तं च निवृत्तं च धर्मविद्याद्वयात्मकम् ॥
ब्रह्मविद्याद्वयोपेतं भुक्तिदं मुक्तिदं महत् ।
कथितं विष्णुना सम्यक् पाण्डवाय सुपृच्छते ।
पुराणार्णवसगूढकथाकृदसमुद्भवम् ।

सद्धर्मरत्नं पश्यन्तु बुधाः सन्दर्शितं मया ॥

अस्माभिर्द्धर्मविषये प्रोक्तमत्र विविच्य यत्।
विचारयन्तु मात्सर्यमपास्य सुधियश्च तत्॥

श्रीभक्तिसागरग्रन्थे दूरीकृतविसंमते।
विचरन्तु जना धर्ममार्गे परमसत्कृते॥

स्तनेषु संस्थितं दुग्धं साधुर्गृह्णाति युक्तितः।
जलौका तत्र संलग्ना गृह्णाति रुधिरं बहु॥

एवं सदसतोर्व्यक्तिस्वभावो दुरतिक्रमः।
माहेश्वरीवंशविभूषणस्य दामोदरस्याङ्गसमुद्भवस्य॥
चौहत्यसाधोरभवन्नियोगान्मे भक्तिसिन्धुं रचितुं प्रयत्नः॥१॥
दानेषु शौर्येषु शमेषु वित्तः सत्येषु शौचेषु शमेषु युक्तः।
सद्धर्मसद्भक्तिविशुद्धबुद्धिश्चौहत्यमल्लः किल धर्ममूर्तिः॥ २॥

श्रीनारायणभट्टेन देवभट्टस्य सूनुना।
भारताचार्यमुख्येन रचितो भक्तिसागरः॥

नन्देषु रसभूसंज्ञे विक्रमार्कस्य वत्सरे।
मार्गशीर्षे शुक्लपक्षे पञ्चम्यां चन्द्रवासरे॥

संपूर्णतां समगमद् ग्रन्थोऽयं भक्तिसागरः।
सीताकटाक्षविक्षेपमधुपैरुपशोभितम्॥

रामचन्द्रपदाम्भोजं भूयान्मम मुदे सदा।

इति श्रीदेवभट्टसुतनारायणभट्टविरचिते भक्तिसागरे करालजनक-
वशिष्ठसंवाद-वशिष्ठभुशुण्डसंवाद-कृष्णोद्धवसंवादग्रन्थ-
श्रवणफलस्तुतिपरमार्थनिरूपणन्नाम
दशमस्तरङ्गः॥ १०॥

समाप्तम्॥

